Digitized by Arya Samaj Foundation Chennai and eGangotri

॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला
११९

2413

महाकविभवभूतिविरचितम्—

# उत्तररामचरितम्

चन्द्रकला-विद्योतिनी-व्याख्याद्वयोपेतम्

व्याख्याकारः—

धर्मशास्त्राचार्यः, काव्यतीर्थः, साहित्यसुधाकरो महोपाध्यायः—

**श्रीशेषराजशर्मा रेग्मीः**

काशीहिन्दूविश्वविद्यालय-नेपालीविभागाध्यक्षः—

टिप्पणी( नोट्स )लेखकः—

**श्रीकान्तानाथशास्त्री तेलङ्गः, एम. ए.**

काशीहिन्दूविश्वविद्यालय-संस्कृतविभागाध्यापकः

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

आर्ष-पाणिनि-प्रज्ञा-अनुसन्धान
तिथी......10
पु०सं०......17

# उदाहारः

सुरभारतीपरिचरणप्रयताऽन्तःकरणानां सदाचारशरणानां भारतीयसंस्कृति-संरक्षणतत्पराणां श्रीमतां तत्रभवतां भवतामतिरोहित एषोऽर्थो यद्विश्वसाहित्ये नाटकस्य कीदृशं स्थानमिति ।

यद्यपि कविकर्मनिर्वहणप्रवणानां समेष्वपि साहित्याङ्गेषु परममहदुत्तरदायित्वं, परं नाटकाऽभिधानेन समुपनिबद्धे प्रबन्धे ग्रन्थकारस्य यादृशः कार्यभारस्तथा नेतराङ्गेषु । इममेवार्थं लक्ष्यीकृत्य व्यलेखि भरतेन महामुनिना—

'न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न स योगो न तत्कर्म नाटके यन्न दृश्यते ॥' इति ।'

तादृशस्य नाटकस्योत्पत्तिविषये विदुषां सुमहान्मतभेदः परिलक्ष्यते । 'नाटकस्य पूर्वप्रादुर्भावो यवन ( ग्रीस ) देशात्तत एव भारतीया आर्यास्तस्य निर्माणमभिनयं च शिक्षितवन्त' इति बहूनां प्रतीच्यविदुषां तदनुसारिणां चाऽभिमतम् । अत्रार्थे ते भारतीयनाटके प्रयुज्यमानं यवनिकाशब्दमुदाहरन्ति ।

परं वेदसंहितायां, ब्राह्मणभागे, प्राचीनमहाकाव्ये, पाणिनीयायामष्टाध्याय्यां पातञ्जले महाभाष्ये च पुरातननाटकानां बहूनि निदर्शनानि समुपलभ्यन्ते । एवं च रामायणे 'व्यामिश्रक' शब्दः संस्कृतप्राकृतनाटकाऽर्थे प्रयुक्तः । अष्टाध्याय्यां 'पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः' ( ४।३।११० ) 'कर्मन्दकृशाश्वादिनिः' ( ४।३।१११ ) इति सूत्रद्वये महामुनिना पाणिनिना शिलालिकृशाश्वयोर्नटसूत्रयोरुल्लेखो व्यधायि । महाभाष्ये च 'शौभिक-शौभिका-शोभनिका-' प्रभृतिशब्दैः सुकृतिना मुनिवरपतञ्जलिना भारते नाट्यरङ्गस्य विद्यमानता स्फुटीकृता । तत्रैव च 'वालिवध-कंसवध' प्रभृतिशब्दानां च प्रयोगोऽवलोक्यते । किं बहुना ? मगधराजो विम्बसारो नागराजसंमाननाय नाटकाऽभिनयमकारयत् । बुद्धदेवश्च नाट्याभिनयस्याऽकर्तव्यतामुपादिशत्तदनुशासने । इत्थं चाऽतिपुरातनाद-निर्दिष्टसमयादारभ्य वेदशास्त्रलोकमय्यां प्रयोगस्थानत्रितय्यामपि भारते वर्षे नाटक-प्रचारपर्यालोचनया 'भारतीया नाटकं यवनदेशाज्जगृहुरि' ति मतं सर्वतोभावेन दुर्विदग्धानामज्ञानविजृम्भितम् ।

अथाऽवशिष्टो यवनिकाशब्दविचारः । शुद्धः शब्दो जवनिका यमनिका वा वर्तते । ततो यवनिकापदं यमनिकाया अपभ्रंशरूपेणैव सर्वसाधारणप्रयोगेषु लब्धाऽऽ-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

स्पदम्। अतस्तदाधारेणाऽपि नाटकेषु भारतीयान्प्रति यवनानां नोत्तमर्णत्वं संभवतीति सर्वं सुस्थम्।

सन्ति यद्यपि संस्कृतसाहित्ये नाटकनिर्मातारो बहवः प्रमातारः परं तत्राऽपि लोकाऽतिशायियशोराशिसमुद्भासितौ कविवरौ द्वावेव-विश्वविदितमहानुभूतिर्भवभूतिरेको द्वितीयश्चाऽद्वितीयो भारतीविलासः कविकुलगुरुः कालिदासः।

तत्राऽस्मदीयप्रकृतकृतिसम्बद्धस्य भवभूतेः परिचयाऽर्थं कतिपयाः शब्दाः समुपह्रियन्ते तावत्। अस्य कृतिवरस्य कृतित्वेन समासादितानि त्रीणि रूपकाणि वर्तन्ते। तत्राऽपि 'महावीरचरितमुत्तररामचरितं' चेति भगवच्छ्रीरामचरितप्रतिपादकं नाटकद्वितयं, तृतीयं च रूपकं 'मालतीमाधवा'ऽभिधानमनितरसाधारणं प्रकरणम्।

यशःप्रकाशेन कालिदासेन स्वकीयसंस्तवसंसूचने यथा सर्वथा विहितोपेक्षा, न तथा साहित्यसुधासूतिना भवभूतिनेति तदीयपरिचयवितरणार्थं तत्कृतित एव कश्चिदंशः समुद्ध्रियते। रावणवधं यावच्चित्रितरामचरिते महावीरचरिते सूत्रधारो नाटककारं निर्दिशति—'अस्ति दक्षिणापथे पद्मपुरं नाम नगरम्। तत्र केचित्तैत्तिरीयाः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिन उदुम्बरा ब्रह्मवादिनः प्रतिवसन्ति। तदामुष्यायणस्य तत्रभवतो वाजपेययाजिनो महाकवेः पञ्चमः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्तेर्नीलकण्ठस्यात्मसंभवः श्रीकण्ठपदलाञ्छनो भवभूतिर्नाम जातुकर्णीपुत्रः कविर्निधेयमस्माकमित्यत्र भवन्तो विदाङ्कुर्वन्तु।

'श्रेष्ठः परमहंसानां महर्षीणामिवाऽङ्गिराः।
यथार्थनामा भगवान् यस्य ज्ञाननिधिर्गुरुः॥' इति।

एतस्मात्सन्दर्भादित्थं प्रतीयते यदयं महाकविर्महाकव्यभिख्याद्वाजपेययाजिनः स्वपूर्वपुरुषात्पञ्चमो विदर्भ-( बरार ) देशस्थपद्मपुरनगरवास्तव्यो गोत्रेण काश्यपः कृष्णयजुर्वेदीयतैत्तिरीयशाखाऽध्यायी नाम्ना श्रीकण्ठ आसीत्। अस्य जननी जातुकर्णी, जनको नीलकण्ठः, पितामहो भट्टगोपालो, गुरुश्च ज्ञाननिधिर्नाम।

मालतीमाधवेऽपि सदाशयस्याऽस्य प्राय एतादृश एव परिचयः, परं तत्रोत्तररामचरिते च 'पदवाक्यप्रमाणज्ञ' इत्येतदपि महाकविना स्वीयं विशेषणं समुपवर्णितम्। महाकविरयमभिधानेन श्रीकण्ठ उपाधितश्च भवभूतिरासीदित्ययं विषयो निर्विशयमस्माभिः प्रकृतनाटकव्याख्योपक्रमे समाहितः। परं रूपकत्रितयेऽपि कवयिताऽयं भवभूतिरिति विश्रुतित एव सहृदयश्रुतिपदवीं प्रापितः। मालतीमाधव-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्यैकस्मिन्पुराणे हस्तलिखितपुस्तके 'प्रकरणमिदं कुमारिलशिष्यस्योम्बेकाचार्यस्ये'-ति निर्दिष्टम् । उम्बेकाचार्यश्च निखिलविद्वत्कुलललामकुमारिलभट्टकृतस्य श्लोक-वार्तिकस्य टीकाकारत्वेन प्रसिद्धः । एवं च चित्सुखाचार्यप्रणीततत्त्वप्रदीपिकाऽऽ-ख्यस्य विख्यातवेदान्तग्रन्थस्य व्याख्याकारेण ग्रन्थकृत्कृत उम्बेकनामचर्चाप्रसङ्गे भवभूतेरुम्बेकस्य च तादात्म्यप्रतिपादनेनाऽप्यस्याऽर्थस्य समर्थनं भवति ।

परमत्रार्थेऽयं विमर्शः—भवभूतिना स्वगुरुर्ज्ञाननिधिरिति वर्णितो न कुमारिल-भट्टस्तत एतल्लेखनं न प्रमाणपदवीमारोढुमीष्ट इति केचित् । अस्मन्मते तु कुमा-रिलभट्टस्यैव नामान्तरमुपाधिर्वा ज्ञाननिधिरिति संभवेत् । 'परमहंसानां श्रेष्ठ' इति ज्ञाननिधेर्विशेषणदर्शनात्तस्योत्तरमीमांसाचार्यत्वमेव सिध्येत् , कुमारिलभट्टस्तु पूर्व-मीमांसायामेव निष्णात आसीदतः कथं नाम ज्ञाननिधिकुमारिलयोरैक्यं प्रतीयत इति विप्रतिपत्तौ—यस्मिन् विषये विदुषां कृतिः समासाद्यते तदितरविषये तेषामा-चार्यत्वं न संभवतीत्येषा किमीश्वरस्यादेश उताहो राज्ञः ? कुमारिलभट्टो वेदान्तेऽपि कृतभूरिपरिश्रम आसीदित्ययं विचारः—

> 'इत्याह नास्तिक्यनिराकरिष्णुरात्माऽस्तितां भाष्यकृदत्र युक्त्या ।
> दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन ॥'

श्लोकवार्तिकस्थितयैतया तदुक्त्या परिपोषमाप्नोति । अपरं च तदानीन्तना आचार्याः प्रगाढाऽध्ययनाऽनन्तरमेव तत्तन्मतानां खण्डनमण्डनादिव्यापारेषु प्रसिता अभूवन्न त्विदानीन्तनमनीषिण इव स्वोत्प्रेक्षितवचनबलादेव तादृशव्यवसायमकार्षुः ।

यद्वा किमेकस्य शिष्यस्य गुरुबाहुल्यं न संभवति ? 'नैकः सर्वं विजानाती'ति नयेन तत्तच्छास्त्रेषु तत्तद्विशिष्टगुरुगवेषणमनीषयैकस्यापि शिष्यस्य बहवो गुरवः स्युः । इत्थं च भट्टोम्बेकाऽपरपर्यायस्य भवभूतेः पूर्वमीमांसायां कुमारिलभट्ट उत्तर मीमांसायां च ज्ञाननिधिर्नाम गुरुरासीदित्यपि संभावनापदवीमारोहति । अपरं चोत्तररामचरिते चतुर्थेऽङ्के 'दण्डायन-सौधातकि-' संलापे 'समांसो मधुपर्क' इत्याकारकशब्दकदम्बकं मीमांसकवदस्य भवभूतेः श्रौतकर्मसमर्थकं दृश्यते । इत्थ-मेव 'पदवाक्यप्रमाणज्ञ' इत्येतद्विशेषणमस्य धीरधूर्धरस्य मीमांसकत्वमपि स्फुटं प्रतिपादयति । एवं श्लोकवार्तिके तात्पर्यटीकाया रचयिता नाम्नोम्बेकः, परं तत्र भट्टपदस्य पूर्वसन्नियोगेन भट्टोम्बेक इति यादृक् समुपदर्शितस्तादृगेव भवभूतेः पितामहोऽपि भट्टगोपालः । अयमप्यभिधानेन गोपालो भट्टपदस्य पूर्वसन्निवेशेन भट्टगोपाल इति स्यात् , यतो भट्टपदं नाम्नो रूपेण तदेकदेशत्वेन वा न कुत्राऽप्यु-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पयुज्यते; विशेषणरूपेणैव प्रयुज्यमानत्वात् । शास्त्रचतुष्टयवेत्ता भट्टपदोपाधिको भवति । इत्थं च भट्टगोपालनामसादृश्यादपि भवभूतिभट्टोम्बेकयोरेकभूयत्वं संगच्छते ।

अपरमिदमपि प्रमाणं तथ्यकोटिमाटीकते—तात्पर्यटीकायाः प्रक्रमे भट्टोम्बेकेन 'ये नाम केचिदिह नः' इति श्लोकोऽवतारितः । स्फुटमेवैष श्लोको भवभूतिकर्तृको मालतीमाधवप्रकरणे सूत्रधारमुखतो वर्णितः । अतो निःसङ्कोचं शक्यते वक्तुमेतद्यथा कालिदासेन केचिच्छ्लोका रघुवंशकुमारसंभवयोः समानरूपेणाऽवतारितास्तथैव भवभूतिना स्वप्रणीतकृतिद्वितयेऽपि श्लोक एषोऽविशेषरूपेण विचक्षणानां लोचनगोचरीकृतः ।

ननु ग्रन्थ उद्धरणादेव यस्य कस्याऽपि श्लोकस्य ग्रन्थकर्तृकर्तृकत्वं स्यात्तदा सुगृहीतनामधेयेन कुमारिलभट्टेन निजग्रन्थे 'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय' इत्युद्धृतस्य कालिदासीयश्लोकार्द्धस्याऽपि तदीयत्वं स्यादत इयं युक्तिर्विचारसहा नेति चेन्न । लौकिकोक्तेरपि शास्त्रार्थे क्वचिदुपादेयत्वाद्भट्टपादेन प्रामाणिकरूपेणोद्धृतमिदं श्लोकार्द्धम्, परं भट्टोम्बेकेन स्वनिर्मितग्रन्थान्तरश्लोक उपोद्घातत्वेनाऽवतारितः । ग्रन्थारम्भ एव परकर्तृकश्लोकं न कोऽपि मतिमान्विन्यसेत् ।

यद्येवं तर्हि कुमारिलभट्टेन श्लोकवार्तिकप्रारम्भे—

'विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्द्धधारिणे ॥'

इति सप्तशत्यङ्गभूतस्य कीलकस्तोत्राऽऽद्यः श्लोकः कथमुद्धृत इति चेन्न । अस्य परकर्तृकत्वेऽपि शङ्करनमस्कारात्मकेन यज्ञप्रणिपाताकारेण वा मङ्गलरूपेण कुमारिलभट्टकृतं प्रदर्शनं नाऽस्मदीयमतप्रतिकूलम् । एतत्प्रातिलोम्येन 'ये नामे' त्यादि पद्यं तु न मङ्गलप्रयोजनकं, प्रत्युत स्वकृतिषु परोद्भावितदोषकषायितचेतसा सुमेधसा भवभूतिना स्ववैशिष्ट्यप्रकटीकरणायैव विन्यस्तमिति भवभूतिभट्टोम्बेकयोः सत्ता नाऽन्योन्याभावगर्भेति सर्वं निरवद्यम् ।

भवभूतिग्रन्थतस्तस्य समयचरितादिविषयः पूर्वोल्लिखिताऽतिरिक्तो न प्राप्यते । अस्य महाकवे रूपकत्रयमपि कालप्रियानाथोत्सवेऽभिनीतमासीदिति तत्रैव व्यक्तं विभाव्यते । अयं कालप्रियानाथ उज्जयिनीस्थो महाकालेश्वर इत्यवसीयते ।

भारतीयकविविलक्षणेन विचक्षणपुङ्गवेन कविवरकह्लणेन स्वकृतेतिहासमय्यां राजतरङ्गिण्याम्—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पाणिनि-प्रज्ञा-अनुसंधान तिथी........ पृ०सं०........

'कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः ।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् ॥'

श्लोकोऽयं काश्मीराऽधीश्वरस्य मुक्तापीडललितादित्यस्योत्कर्षवर्णनेऽभिहितः । ललितादित्येनाऽऽयत्तीकृतस्याऽस्यैव कान्यकुब्जाऽधीशस्य यशोवर्मणः सभायां भवभूतिः सभास्तार आसीत् । यशोवर्मसमयश्च प्रायः सप्तपञ्चाशदधिकसप्तमशतकं विक्रमीयमित्यैतिहासिकैरुररीकृतमतोऽयमेव कालो भवभूतेरपीति मन्तव्यः ।

अयं महाकविरुज्जयिन्यां, कान्यकुब्जे, काश्मीरे चैवमन्यत्राऽपि सततं पर्यटनशील आसीत्, कालिदास-बाणभट्टादिवज्जीविताऽवस्थायां न तादृशीं प्रतिष्ठामापेति विषयोऽस्यैव जातपूर्वचर्चमालतीमाधवस्थादेतस्मात्पद्यादनुमातुं शक्यते—

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥' इति

अस्य निरीक्षणेन महाकवेः खिद्यमानमानसत्वं साधारणमानवानामप्यतिरोहितं भवति । स्वाश्रयदातुर्यशोवर्मदेवस्य पराजयेनाऽपि तस्य हृदये प्रकाशरूपेण निर्वेदातिशयो लब्धाऽवकाशः स्यादित्ययमप्यर्थ ऊहितुं शक्यते । 'उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी' त्येतत्कथनेन तादृशेऽपि काले कविवरे स्वभावोचितस्याऽऽत्माऽभिमानस्य सत्त्वं कस्य सचेतसश्चेतसि स्वकीयं महत्त्वं न स्थापयति । यथाऽयं कविवरोऽलौकिक्या काव्यशक्त्या परमाऽनुपमस्तथैव शास्त्रीये पाण्डित्ये चाऽत्युद्भट एवाऽऽसीदितीयं वार्ताऽदसीयाभिम्नस्थान्मालतीमाधवीयपद्यादवसीयते—

'यद्वेदाऽध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
ज्ञानं तत्कथनेन किं ? न हि ततः कश्चिद् गुणो नाटके ।
यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति, ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः ॥' इति ।

अस्मादिव हेतोः कविवरेण स्वीया समस्ताऽपि कृतिः प्रायो गौडीरीत्या महताऽऽडम्बरेण प्रकाशिता, परं यत्र कुत्राऽपि वैदर्भी रीतिरभ्युद्गता तत्राऽप्यधिगता प्रकर्षाधिक्यात्पूरिता सफलता । किं बहुना स्वविषय एतदीयकथनमेतत्तथ्यपूर्णं वर्वर्त्ति—

'यं ब्रह्माणमियं देवी वाग्वश्यैवाऽन्ववर्तत ।' इति । ( २।२ )

अस्य शास्त्रीयपाण्डित्यव्यञ्जकानि कानिचिदुदाहरणानि प्रदर्श्यन्ते—महावीर-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

चरिते कविवरेण पुरोधःप्रशंसायां 'राष्ट्रगोपः पुरोहित' इत्याकारक ऐतरेयब्राह्मणस्य कश्चिन्मन्त्र उद्धृतः।

उत्तररामचरितस्य चतुर्थाङ्के जनकाऽऽननादेव 'असूर्या नाम ते लोका' इत्यादिवाक्यानि निर्गमय्य भवभूतिनेशावास्योपनिषद्विज्ञता विज्ञप्ता। तत्रैव—

'विद्याकल्पेन मरुता मेघानां भूयसामपि।
ब्रह्मणीव विवर्तानां क्वापि प्रविलयः कृतः॥' इति (६।६।)।

अनेन श्लोकेन कृतिवरेणाऽद्वैतवेदान्तसिद्धान्त उद्भासितः। मालतीमाधवे च महाकविना योगे तन्त्रे च स्वस्यापरतन्त्रत्वं विशदीकृतम्। इत्थमापातत आलोकनेनाऽप्यस्य लोकोत्तरं वैदुष्यमवसीयते।

साम्प्रतं भवभूतिकालिदासयोश्चांऽऽशिकतुलनोपकल्प्यते। बाह्यजगच्चित्रणे यथा कालिदासः सफलप्रयासस्तथैवाऽन्तर्जगदालेख्यलेखने श्लाघनीयाऽनुभूतिर्भवभूतिरिति। स्वविषयसाफल्ये द्वावपि कविमूर्धन्यौ परमधन्यौ चेति समसम्मत्या निष्प्रपञ्चं शक्यते वक्तुम्।

'एक एव भवेदङ्गी शृङ्गारो वीर एव वा' इत्याकारकाऽऽलङ्कारिकनयपरिसरणपुरःसरं कालिदासेनाऽवश्यमेव स्वीयं पुरातनसिद्धान्तपारवश्यं प्रकाशितं, परं कविकुलकुमुदसुधासूतिना भवभूतिनाऽत्र विषये नैजं प्रतननियमाऽनिघ्नत्वं निर्विघ्नमेव प्रसाधितम्। सहृदयहृदयद्रावकः करुणस्यं एनेनैव महाकविना शृङ्गारवीररसकक्षायामवतारितं इतीयमेव का कथा? सर्वथा स्वयुक्तिशक्त्येतरेषां समेषामपि रसानां करुणस्यैव शेषत्वेन प्रवेशो विनिवेशितः। अमुमेवाऽर्थं प्रतिपादितवान् महाधीमान् कविवरोऽनया वाचोभङ्ग्या।

'एको रसः करुण एव निमित्तभेदाद्भिन्नः पृथक्पृथगिवाश्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान्विकारानम्भो यथा सलिलमेव तु तत्समग्रम्॥'

इति (३।४७)।

अतः पार्यते वक्तुं विषयेऽत्र भवभूतिर्मतिवैशिष्ट्येन कालिदासमतिशेते।

श्लाघनीयप्रतिभाविकासयोर्भवभूतिकालिदासयोर्द्वयोरपि कृतिषु विपुलहृदयैः कवेर्यो गभीरध्वनिः प्रचुरपरिमाणे निभाल्यते। कालिदासः प्रकृतिदेव्या मनोरमां मूर्तिमनावृतभावेनाऽद्राक्षीत्, परं भवभूतिस्तस्या भीषणां प्रशान्तगम्भीरां च मूर्तिं समीचीनया विधया लोचनगोचरीचकार। अतएव दण्डकारण्ये दृश्यपदार्थानां वर्णने तादृशी प्रशान्तगम्भीरा भीषणा च प्रकृतिप्रतिकृतिः पुरतः प्रादुर्भवति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सम्प्रति भवभूतिकृतप्रकृतकृतिवैशिष्ट्यं प्रतिपाद्यते । उत्तररामचरिताभिधानं नाटकमिदं वाल्मीकिरामायणस्योत्तरकाण्डस्थकथाभागात्संगृहीतं विद्यते । अस्य नाटकस्योत्तरकाण्डस्थकथानकत्वाद्वा महावीरचरितपरिशिष्टांऽशरूपेण स्थितत्वादेतादृशं नामधेयं समजनि । आहोस्विदुत्तरमुत्कृष्टं रामचरितं यस्मिंस्तदुत्तररामचरितम् । अत्रत्यरामचरितस्योत्कृष्टत्वं चेत्थम्—युद्धकाण्डं यावत्स्थितस्य रामचरितस्य रामे मातापित्रादिगुरुजनभक्तिः, पत्न्यनुजप्रजाजनाऽनुरक्तिश्चेत्यादयो गुणा वर्तन्ते, परं तेऽप्युत्तरकाण्डस्थरामचरिते प्रजाजनाऽनुरञ्जनाऽर्थमादर्शस्थापनार्थं च मर्यादापुरुषोत्तमस्य भगवतः श्रीरामस्य सीतानिर्वासनंसर्वविधसामर्थ्योद्भासिते परमोद्दामयौवनेऽपि विवेकवशीकृतस्य चेतसो निर्वासनत्वं, सर्वथैदाऽनुपमानं धीरधूर्वहत्वं, वर्णाश्रमधर्मसंरक्षणचणत्वं, सपत्नीकत्वेन सम्पादनीयेऽश्वमेधेऽपि सीतायाः प्रतिकृत्यैव मखकार्यनिर्वाहकत्वं चैवमादिगणनाऽतीतगुणगणाऽपेक्षया सुतरां न चकासतीति निश्चप्रचम्, अत एवैतादृशभास्वरचरित्रचित्रणात्मकत्वादस्य नाटकस्य कविकृतमुत्तररामचरितमिति नामधेयं मतिमुकुरे हृदयङ्गमरूपेण प्रतिफलति ।

अत्र नाटके बहवोंऽशाः कविकल्पनाप्रसाधिताः समुपलभ्यन्ते । दिग्दर्शनं यथा—आलेख्यदर्शनम् । आत्रेय्या वनदेवतया वासन्त्या समं तमसायाश्च मुरलया सह संलापः निस्तमसः सीतायास्तमसया सरिता सत्रा निर्विष्टपूर्वस्थाननिध्यानम् । प्राचेतसाश्रमपदे कौसल्याजनकादीनां सम्मेलनम् । भरतमुनिकर्तृको रामायणनाटकाऽभिनयः । चरमेऽङ्के च सीतारामयोर्विस्मयहर्षोत्कर्षाधायकः समागमश्चेत्यादयो बहवो भागाः कवेरनल्पकल्पनाविलासप्रसूताः । भवभूतिरत्र द्वादशसंवत्सरघटनासंघटनं चकार । आलङ्कारिकसमयपरिरक्षणार्थं बहुषु स्थलेषु कविवरेण्येन विष्कम्भकादितः संवादद्वाराऽनेकघटनाः संघटिताः ।

अत्रत्य आलेख्यदर्शनाऽङ्कः संस्कृतसाहित्येऽनुपमः सर्वथैवाऽपूर्वश्च । चित्रदर्शनप्रयोजनविषये विदुषामनेका विप्रतिपत्तयः प्रतिपत्तिपथे प्रादुर्भवन्ति । दिग्दर्शनं यथा—रामस्य राज्याऽभिषेकाऽनन्तरं नैरन्तर्येण सुखाऽनुभूतिसमये सीताकर्तृकं पूर्वाऽनुभूतवनवासादिवियोगदुःखप्रत्यभिज्ञायकमालेख्यदर्शनं नाऽभविष्यच्चेत्तर्हि कियत्क्षणाऽनन्तरमेव भविष्यतस्तत्क्षणं निरवधिरूपेण प्रतीयमानस्य विरहदुःखस्य मर्षणक्षमत्वं सीताया नाऽभविष्यत् । उक्तं चाऽत्रैव—

'पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति ।' इति ।

अतश्चित्रदर्शनं सीतानिर्वासनव्यापारस्याऽसाधारणमुपकारकारणमिति केचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अपरेषां मते तु कालिदासाऽपेक्षया स्ववैलक्षण्यं लक्षयितुं भवभूतिना चित्रदर्शनं निजकृतावतारितम् । यथा वा महाकविना कालिदासेन—

'तयोर्यथाप्रार्थितमिन्द्रियाऽर्थानासेदुषोः सद्मसु चित्रवत्सु ।
प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखान्यभूवन्' ॥ (१४।२५)

इति रघुवंशश्लोके सीतारामयोश्चित्रदर्शनोदन्त एव प्रदर्शितः । परं भवभूतिना तदेव चित्रमात्माऽनल्पकल्पनाकूर्चिकया परिवर्द्धय कुशलवयोर्जृम्भकाऽस्त्राद्यासादन-संसाधनकार्यजातं विधाय स्वस्योत्कर्षः संरक्षितः । महाकवेरेवमादिकल्पनाऽवलोकनेनैव केनाऽप्युक्तम्—

'उत्तरे रामचरिते भवभूतिर्विशिष्यते ।' इति ।

महर्षिवाल्मीकिकृतं सीताविसर्जनवर्णनं पठित्वा कोऽपि हृदयालुर्नयनजलसंवरणं कर्तुं न पारयति । भवभूतिस्तस्यैव करुणस्य विश्लेषणे स्वनिष्ठां सकलामपि शक्तिमुपयुयोज : पुञ्जीभूतमुपलं विदार्य रामस्याऽगाधः सहधर्मिणीप्रणयाऽम्बुधिस्तलस्पर्शरहितो दुःखप्रवाहश्चाऽपरीवाहं भवभूतिकृतौ सञ्चरते । विमृश्यतां तावद्-दुरपनेयविरहदुःखस्यैतस्मादधिकमालेख्यं कथं नाम विधातुं पार्यते—

'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ।' इति । ( १।२८ )

अत एव गोवर्द्धनाचार्य आर्यासप्तशत्यामित्थं भवभूतिनुतिं प्रत्यपादयत्—

'भवभूतेः सम्बन्धाद् भूधरभूरेव भारती भाति ।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥' इति ॥

नाटक आवश्यकत्वेनाऽभिमतस्य विदूषकस्याऽभावेऽत्र बहवः सूरिवरा भूरितरविचारं प्रदर्शयन्ति । परमस्मन्मतेऽत्र करुणरसस्य शोषित्वाद्धास्यरसपोषकस्य विदूषकस्य न तादृश उपयोगः । तथाऽप्येकत्र स्थले मुनिकुमारमुखतो हयवर्णन-व्यपदेशेन मधुरया गिरा गुम्फितो हास्यपोषक एकः श्लोकः समुपलभ्यते । स यथा—

'पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं वाऽऽख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥' इति । (४।२६) ।

इत्थं चेहोत्तररामचरित आलङ्कारिकाणां कथाया वर्णनस्य च दृष्ट्या रमणीयसरणिप्रचलिता स्वातन्त्र्यविभूषिता प्रतिमा परिलक्षिता भवति । कवेरेतादृश एव कृति-स्वातन्त्र्ये केनाऽपि विदुषाऽभिहितम्—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'अपारे काव्यसंसारे कविरेकः प्रजापतिः।
यथाऽस्मै रोचते विश्वं तथेदं परिवर्तते ॥
शृङ्गारी चेत्कविः काव्यं सर्वं रसमयं भवेत्।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥' इति।

परमत्राऽपरोऽयं द्वापरः पुरत आविर्भवति। कवेरेतादृशे स्वातन्त्र्ये सत्यपि तत् प्रकृतघटनाऽन्यथाकारे किमप्युचितं बीजमुपादायैव प्रसरति। ससीममेव तत्स्वातन्त्र्यमिति वक्तव्यम्। अत्राऽर्थे यथा निगदितं विश्वनाथकविराजेन—

'यत्स्यादनुचितं वस्तु नायकस्य रसस्य वा।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥' इति।

अनुचितमितिवृत्तं यथा—रामकृतश्छद्मना वालिवधः। तच्चोदात्तराघवे नोक्तमेव। वीरचरिते तु वाली रामवधाऽर्थमागतो रामेण हत इत्यन्यथाकृतः।' इति।

यन्नाम महाकविना चरमेऽङ्के सीतारामयोः समागमोत्पादनेन प्रकृतनाटकं संयोगान्तं विहितं तदैतिहासिकनयाऽनुगुणं कथङ्कारं संगच्छते? तथा च रामकर्तृकस्य सीतापरित्यागस्य रागद्वेषमूलकत्वाऽभावात्तस्य नाऽनुचितेतिवृत्तता, यथाऽन्यथाकारः संभवेत्। संयोगात्मककृत्या कृतिना माङ्गलिकी भारतीयरीतिपरम्परा पुरातनसंस्थापरा कारितेति सत्यम्। परमिहैतिहासिकानामुताहो पुरातनभारतीयानां परम्परा संरक्षणीयेति कतरः पक्षो वरतर इत्यालोचनीयम्।

अथेयमुपन्यस्यत एतादृश्या विचिकित्सारुजायाः समाधानरूपा चिकित्सा। पद्मपुराणीयां पातालखण्डस्थां रामाऽश्वमेधीयां कथामनुसृत्य महाकविना समारचित एष व्यतिकरः। अतो निरङ्कुशदोषलेशेनाऽप्यपरामृष्टत्वात् प्रत्युत पुरातनोभयविधनियमाऽनुसरणतः कृतिवरस्यैतत्कृत्यं भूषणमेव न तु सहृदूषणमिति सर्वं रमणीयम्।

यद्येवं तर्हि रामायणेन पद्मपुराणस्य विसंवादः साऽपवाद एवेति चेन्न। 'यः कल्पः स कल्पपूर्व' इति न्यायेन 'कल्पभेदाच्चरित्रभेदः' इति व्यवस्थितत्वादितिहासेन पञ्चलक्षणस्य सुसंवाद इत्युच्चैर्वादः।

सम्प्रति समासेनोत्तररामचरितस्थवर्णनीयांऽशानामुल्लेखः क्रियते। निभाल्यतां तावत्कीदृशोऽयमभ्युत्कर्षाऽऽधायकः श्लोकः—

'लौकिकानां हि साधूनामर्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति' ॥ (१।१०) इति।
'युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत्परमं धनं वः' (१।११)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इत्याकारकं महर्षिश्रेष्ठस्य वशिष्ठस्यादिष्टमाकर्ण्य भगवता श्रीरामचन्द्रेण यन्नाम प्रतिवाक्यं प्रयुक्तं तत्साम्प्रतिकेऽनभीप्सितराजतन्त्रे स्वतन्त्रभारते भारतीयैः 'पुरा धर्मनियन्त्रितराजतन्त्रे राज्ये कीदृशो वाचामगोचरः प्रकर्ष आसीदि' त्यालोचनीयोऽयं विषयः। तद्यथा—

'स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नाऽस्ति मे व्यथा॥' इति। (१।१२)

पुरा संयोगदशायामनुभूतस्य सुखस्य कीदृशं निदर्शनमेतत्—

'जीवत्सु तातपादेषु नूतने दारसंग्रहे।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः॥' इति (१।१९)

प्रणयस्य-कीदृशोऽयमसाधारणः परिचयः—

'अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।
कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते॥' इति (१।३९)

लोकोत्तराणां चेतसः कविकृतोऽयमभिनवः संस्तवः कीदृशः सहृदयहृदयावर्जक इति विवेचयन्तु तावत्—

'वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति॥' इति (२।७)

दण्डकारण्ये वासन्तीविहितमिदं मध्याह्नवर्णनमतीव स्वाभाविकम्—

'कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभि-
र्घर्मस्रंसितबन्धनैः स्वकुसुमैरर्चन्ति गोदावरीम्।
छायाऽपस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः॥' इति (२।९)

पतिनिर्वासितायाः सीताया एतद्वर्णनं कस्य हृदये करुणां नोत्पादयेत्—

'परिपाण्डु दुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम्।
करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी॥' इति (३।४)

द्वादशसंवत्सरपर्यन्तं पतिवियोगव्यथामनुभूय सीतायाः शम्बूकवधाऽर्थं दण्डकाऽरण्यसमायातस्य रामस्य वाक्यमाकर्ण्य यादृशी हृदयदशाऽभूत्तस्याः कीदृशमन्तस्तत्त्वोद्घाटकं वर्णनमिदम्—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


'तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-
द्वियोगे दीर्घेऽस्मिञ्झटिति घटनोत्तम्भितमिव ।
प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन्क्षण इव ॥' इति । ( ३।१३ )

एवं च स्ववयस्यया वासन्त्या राम उपालब्धेऽपि राममयजीवितायाः सीताया-स्तत्र स्वाऽनभिमतिप्रदर्शनं सतीधर्मस्य परां काष्ठामवगमयति । सीताप्रशंसाप्रसङ्गे व्यक्तिविशेषनैरपेक्ष्येण गुणानां प्रतीक्ष्यत्वं कथं प्रसाधितमिति चिन्त्यताम्—

'शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति ।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्याऽसि जगतां
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥' इति । (४।११)

रक्षाऽवसरेऽपि लवचन्द्रकेत्वो रक्तसम्बन्धनिबन्धनस्य मिथोऽनुरागस्य द्योति-कोक्तिरियं स्वाभाविकत्वोपेता—

'यदृच्छासंवादः किमु गुणगणानामतिशयः
पुराणो वा जन्मान्तरनिबिडबद्धः परिचयः ।
निजो वा सम्बन्धः किमु विधिवशात्कोऽप्यविदितो
ममैतस्मिन्दृष्टे हृदयमवधानं रचयति ॥' इति । ( ४।१६ )

प्रणयस्य कारणाऽनपेक्षत्वं कीदृश्या विच्छित्त्या प्रदर्शितम्—

'व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥' इति ( ६।१२ )

सीतापरित्यागे रामस्य निर्दोषता महता कौशलेन प्रतिपादिता कविवरेण—

'घोरं लोके विततमयशो या च वह्नौ विशुद्धि-
र्लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु ।
इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः
कृत्स्नो लोकस्तदिह विषमे किं स वत्सः करोतु ॥' इति (७।६)

अतिशयसंक्षेपेणाऽनायासरूपेण मतिपथागतानि कानिचिद्वैशिष्ट्यानि प्रदर्शि-तानि, तानि नैतावत्त्वेन परिज्ञेयानि ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

कुत्रचिच्च समस्तपदबाहुल्येन प्रसङ्गाऽननुगुणानि दीर्घवाक्यानि हृदयोद्वेजकत्वेन सदूषणान्यपि वर्तन्त इत्यपि समालोचकधर्मं निर्वहन्नावेदयामि। परं गुणभूयस्त्वेन तादृशदोषनिमीलनमेव सर्वैरपि स्वीक्रियते।

विस्तृतवर्णनाऽर्थं सर्वविधाऽवकाशस्याऽऽवश्यकता विद्यते। भगवत्कृपाऽभविष्यच्चेत्तर्हि संस्कृतसाहित्येतिहासे भवभूतिवैशिष्ट्यवर्णनं विशदरूपेणाऽकरिष्यम्। अतः सम्प्रत्येतावतैव विरम्यते।

भवभूतिकृतित्वेन प्रथितिमाप्तं गदाधरभट्टसंकलिते रसिकजीवने पद्यद्वितयं बृहच्छार्ङ्गधरपद्धतौ च एकं संहत्य पद्यत्रयं समुपलभ्यते। तद्यथा—

'अलिपटलैरनुयातां सहृदयहृदयज्वरं विलुम्पन्तीम्।
मृगमदपरिमललहरीं समीर! किं पामरेषु रे किरसि॥' इति।

एवं च—

किं चन्द्रमाः प्रत्युपकारलिप्सया करोति गोभिः कुमुदाऽवबोधनम्।
स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम्॥' इति।

पद्यद्वितयमिदं रसिकजीवनस्थं, तथा च—

'निरवद्यानि पद्यानि यदि नाट्यस्य का क्षतिः?।
भिक्षुकक्षाविनिक्षिप्तः किमिक्षुर्नीरसो भवेत्॥' इति।

इदं पद्यं बृहच्छार्ङ्गधरपद्धतिस्थितं वर्तते। अतो भवभूतिकृत्यन्तरमप्यनुमाविषयीक्रियते, सम्प्रति तदनुपलब्धेस्तूष्णीकत्वमेव कक्षीक्रियते।

इदानीं विद्वल्लोककृतभवभूतिश्लोकाऽऽलोकार्थं किञ्चित्प्रयत्यते। सहृदयहृदयाऽऽनन्दवर्द्धनेन गोवर्द्धनेन कृता भवभूतिप्रशंसा पूर्वमेव गता।

कान्यकुब्जाऽधिपतियशोवर्मसभास्तारो वाक्पतिराजः प्राकृतभाषामये स्वनिर्मिते 'गउड वहो' इत्यभिख्ये काव्ये निम्नस्थयाऽनया गाथया भवभूतिकृतिं समवर्णयत्—

भवभूइजलहिनिग्गयकव्वामयरसकणा इव फुरन्ति।
जस्स विसेसा अज्जवि वियडेसु कहाणिवेसेसु॥' इति।

संस्कृतच्छाया यथा—

भवभूतिजलधिनिर्गतकाव्याऽमृतरसकणा इव स्फुरन्ति।
यस्य विशेषा अद्याऽपि विकटेषु कथानिवेशेषु॥' इति।

कवीन्द्रः क्षेमेन्द्रो भवभूतेः शिखरिणीमित्थं वर्णितवान्—

भवभूतेः शिखरिणी निरर्गलतरङ्गिणी।
रुचिरा घनसन्दर्भे या मयूरीव नृत्यति॥' इति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तिलकमञ्जरीकारो महाकविर्धनपालो भवभूतिमित्थं प्राशंसत्—

'स्पष्टभाववरसा चित्रैः पदन्यासैः प्रवर्तिता ।
नाटकेषु नटस्त्रीव भारती भवभूतितः ॥' इति ।

कविविभूतेर्भवभूतेर्विषये कस्यचिद्विदुषोऽभिमतमिदम्—

'सुकवित्रितयं मन्ये निखिलेऽपि महीतले ।
भवभूतिः शुकश्चाऽयं वाल्मीकिस्तु तृतीयकः ॥' इति ।

भवभूतिविषये कस्यचित्कृतिन आकूतमिदम्—

'रत्नावलीपूर्वकमन्यदास्तामसीमभोगस्य वचोमयस्य ।
पयोधरस्येव हिमाऽद्रिजायाः परं विभूषा भवभूतिरेव ॥' इति ।

काष्ठां गता क्व भवभूतिवचोविभूतिर्मच्चिद्गताऽतिलघुता सहजा च कुत्र ?
श्रीकृष्णदासकृतिवर्यवचोऽनुनीतष्टीकाऽनुवादकृतिताऽऽस्पदमस्मि नीतः ॥११॥
छात्राऽर्थमेव विवृतोऽस्ति मम प्रयासः, संप्राप्यतेऽत्र न विदग्धवचोविलासः ।
भ्रान्त्यादिदोषविसरं समुपेक्ष्य तावद् गृह्णन्त्विमं गुणगणग्रहणप्रवीणाः ॥ २ ॥

समजनि समयः समात्ययीतः समधिक एव कृतिस्त्वियं समाप्ता ।
क्षतिकरदुरदृष्टदोषराशेः सचपलमात्मविकाशनं न चाप्ता ॥ ३ ॥

ज्ञापनमेतदपि सम्प्रति प्राप्तकालं मन्ये तावदुत्तररामचरितस्य त्रिचतुरास्वपि प्राचीनाऽर्वाचीनासु व्याख्यासु कृतनयनपथाऽतिथित्वास्वपि वाधूलवीरराघवविरचिता पुरातनी भवभूतिभावतलस्पर्शिनीसमाख्या व्याख्या चन्द्रकलाऽभिख्यायामस्मदीयकृतौ विशेषरूपेण साहाय्यग्रहणाऽर्थं समावलम्बिता ।

जातो यदीयदयया मम बोधलेशस्तद्द्वारतस्तदनु शास्त्रपथप्रवेशः ।
तांस्तादृशान्गुरुजनानसकृत्प्रणम्य वन्दे च तानपि, यतोऽत्र कृतौ कृतित्वम् ॥

सोत्साहप्रदानं प्रणिधानपुरःसरं चानुवादादिकार्यजाते मदुपकारमाचरते कल्याणभाजनाय कविवराय सुहृद्वर्यश्रीकेदारनाथशास्त्रिमहाभागाय विलसन्त्वनेके धन्यवादाः ।

एवमेव मुद्रायन्त्रतो मद्विप्रकृष्टस्थितावपि प्रकृष्टमतिविभवेन सम्पादनादिकृत्यव्यूहं निष्प्रत्यूहं समापयद्भ्यो व्याकरणसाहित्याचार्येभ्यः श्रीहरगोविन्दमिश्रमहोदयेभ्योऽमन्दप्रणयप्रकाशनपूर्वकं समुपह्रियन्ते धन्यवादसन्दोहाः । इति शम् ।

पाशुपतक्षेत्रम् ।
( नक्साल, नेपालः )
संवत् २००६ वृषसंक्रान्तिः

विद्वदाश्रवः—
शेषराजशर्म्मा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# उपोद्घात

## ( तृतीय संस्करण )

'णट नृतौ' इस धातुसे 'नटन्तीति नाटकाः' ऐसी व्युत्पति कर 'ण्वुल् तृचौ' इस सूत्र से ण्वुल् प्रत्यय होकर नटवाचक नाटक पद की सिद्धि होती है। 'नाटका अभिनेतारः सन्ति यस्मिंस्तत् नाटकम्' अर्थात् नाटक ( अभिनय करनेवाले ) व्यक्ति जिसमें रहते हैं, उस काव्यविशेष को नाटक कहते हैं। इस व्युत्पत्तिमें नाटक पदसे 'अर्श आदिभ्योऽच्' इस सूत्र से अच् प्रत्यय होकर नाटक पद निष्पन्न होता है।

पाणिनि के धातुपाठ में 'णट नृत्तौ' इस धातु का दो वार प्रयोग किया गया है। प्रथम धातु का अर्थ है वाक्यार्थ का अभिनय रूप नाट्य, जो कि नट से सम्पादित होता है। वैसे नट जिसमें अभिनय करते हैं उसे 'नाटक' कहते हैं।

द्वितीय वार पठित धातु का अर्थ है पदार्थ का अभिनय रूप नृत्य, जो कि नर्तक से सम्पादित होता है।

वस्तुतः नाटक में नटके द्वारा वाक्याऽर्थ और पदार्थ दोनोंका अभिनय होता है। नाटकमें वाक्याऽर्थ के अभिनय के साथ-साथ नट के द्वारा यथास्थान नृत्य, गीत और वाद्य इन तीनों का प्रदर्शन किया जाता है।

नाटक की उत्पत्ति कैसे और किस समयमें हुई इस विषय में पाश्चात्त्य विद्वानों ने वहुत गवेषणाएँ कीं परन्तु वे अभी तक किसी स्थिर सिद्धान्त में आरूढ़ नहीं हो सके हैं। आदिकाल से ही अनुकरण की प्रवृत्ति मानव-हृदय में विद्यमान थी, उसका क्रमसे विकास होकर नाटकके रूपमें परिणति हुई—ऐसा अनुमान किया जाता है।

ऋग्वेदमें यम और यमी के ( १०।१० ), पुरूरवा और उर्वशी के (१०।९५) अगस्त्य और लोपामुद्रा के ( ४।१७९ ), विश्वामित्र और नन्दीगण के ( ३।३३ ) तथा वशिष्ठ और भरतगण के बीच जो उक्ति-प्रत्युक्तियाँ हुई वे ही नाटकके बीजके रूपमें परिलक्षित होती हैं। काल-क्रमसे उनके साथ अभिनय, नृत्य, गीत और वाद्य आदि संयुक्त होकर नाटकके रूपमें परिणति हो गई।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सिल्मन लेनीका मत है कि कालिदासकी दीप्तिसे उनके पूर्ववर्ती ज्योतिर्गण विलुप्त हो गये हैं, परन्तु वेदकी संहिता तथा ब्राह्मण भाग, पाणिनिकी अष्टाध्यायी, पतञ्जलिके महाभाष्य और प्राचीन महाकाव्यमें भी पुरातन नाटकोंके अस्तित्वका बहुत कुछ निदर्शन मिलता है।

महाकवि कालिदासने ही अपने मालविकाग्निमित्र नाटकमें नाटककारके रूप में भास, सौमिल्लक और कविपुत्रका नामोल्लेख किया है, उनमें सौभाग्यसे अनन्तशयन-ग्रन्थमालासे म० म० गणपति शास्त्रीने भासके तेरह नाटकोंका प्रकाशन किया है। महामति अमरसिंहने नाटकके अभिनेताओं के—

'शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः।
भरता इत्यपि नटाः'

अर्थात् शैलाली, शैलूष, जायाजीव, कृशाश्वी, भरत और नट ये छः नाम लिखे हैं।

महामुनि पाणिनि के 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (४–३–११०) इस सूत्र से 'शिलालिना प्रोक्तं नटसूत्रमधीयते' ऐसा विग्रह कर णिनि प्रत्यय होकर शिलालि-पदसे 'शैलालिन्' पद निष्पन्न होता है। अर्थात् शिलाली मुनिसे प्रोक्त नटसूत्रका जो अध्ययन करते हैं उन्हें 'शैलाली' कहते हैं।

इसी प्रकार 'कर्मन्दकृशाश्वादिनिः' (४–३–१११) इस पाणिनीय सूत्रसे 'कृशाश्वेन प्रोक्तं नटसूत्रमधीयत इति कृशाश्विनो नटाः' ऐसा विग्रह करके कृशाश्व पदसे इनि प्रत्यय होकर 'कृशाश्विन्' पद निष्पन्न होता है। एतावता पूर्वकालमें नटसूत्रोंके प्रणेता शिलाली और कृशाश्व नामक दो आचार्य थे यह बात प्रमाणित होती है।

इसी प्रकार 'शिलूषस्येमे' ऐसा विग्रह कर 'तस्येदम्' इस सूत्र से अण् प्रत्यय होकर 'शैलूष' पद निष्पन्न होता है। शिलूष नामके आचार्यके अनुयायीको शैलूष कहते हैं। यद्यपि ये शिलूष आचार्य नटसूत्रके प्रवचनकर्ताके रूपमें प्रसिद्ध नहीं हैं, तथाऽपि ये भी बहुत प्राचीन हैं; क्योंकि वाजसनेय संहिता और रामायणमें 'शैलूष' शब्दका प्रयोग पाया जाता है। महाभारत में भी कहींपर द्रौपदीको शैलूष पदसे अभिहित किया गया है।

'भरतस्य गोत्राऽपत्यानि' ऐसा विग्रह कर भरत पदसे 'अनृष्यानन्तर्ये



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विदादिभ्योऽञ्' (४-१-१०४) इस सूत्रसे अञ् प्रत्यय होकर बहुत्व-विवक्षामें 'यञञोश्च' इति सूत्रसे अञ् प्रत्ययका लोप होकर 'भरताः' ऐसा पद निष्पन्न हो गया है। अर्थात् भरत ऋषिके अपत्योंको 'भरत' कहते हैं। यहाँपर यह बात विशेष विचारणीय है कि नाट्यविद्याके शिलाली, कृशाश्व और भरत ये तीन आचार्य प्रसिद्ध हैं। इनमें पहले के दो नटसूत्रों के रचयिता हैं परन्तु इनका ऋषित्व उपपन्न नहीं है। इसी प्रकार अष्टाध्यायीके अनुसार भरतके नटसूत्रोंके कर्तृत्वकी उपलब्धि न होनेपर भी उनका ऋषित्व संगत होता है, और ये ही तीनों आचार्योंमें सबसे प्राचीनतम प्रतीत होते हैं। त्रेतायुगमें समुद्भूत भरत महर्षिने ही कुश और लवके द्वारा मर्यादापुरुषोत्तम भगवान् रामकी सभामें रामायणका गान कराया था।

नाटक, संगीत आदिके विषयमें महर्षि भरतका ही सर्वप्राचीन लक्षण-ग्रन्थ 'भारतीय नाट्यशास्त्र' उपलब्ध है, जिसपर अभिनवगुप्तपादाचार्यने टीका लिखी है।

नाट्यशास्त्रके प्रथम अध्यायमें नाटककी उत्पत्तिके विषय में लिखा है कि—सत्ययुगमें नाटककी आवश्यकता नहीं थी परन्तु पीछेसे मनुष्यों की प्रीतिके लिए—

'जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि॥'

अर्थात् ऋग्वेदसे पाठ्य, सामवेदसे गान, यजुर्वेदसे अभिनय और अथर्ववेदसे रसोंका ग्रहण किया गया।

इसी तरह शिवजीने 'ताण्डव', पार्वतीजीने लास्य, नृत्य और विष्णु भगवान्ने नाट्यरीति प्रदान की एवम् महर्षि भरतने नाट्यशास्त्रका प्रणयन कर नरलोकमें नाटकका प्रचार किया। इस प्रकारसे इस नाटकको 'पञ्चम वेद' भी कहते हैं। नाटककी उत्पत्तिके विषयमें शुभङ्करकृत सङ्गीतदामोदरमें लिखा है:—

'इहाऽनुश्रूयते ब्रह्मा शक्रेणाऽभ्यर्थितः पुरा।
चकाराऽऽकृष्य वेदेभ्यो नाट्यवेदं तु पञ्चमम्॥
उपवेदोऽथ वेदाश्च चत्वारः कथिताः स्मृतौ।
तत्रोपवेदो गान्धर्वः शिवेनोक्तः स्वयम्भुवे॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तेनाऽपि भरतायोक्तस्तेन मर्त्ये प्रचारितः।
शिवाऽब्जयोनिभरतास्तस्मादस्य प्रयोजकाः ॥'

अर्थात् पूर्वकालमें इन्द्रकी प्रार्थनासे ब्रह्माजीने वेदोंसे आकर्षण कर पञ्चम नाट्यवेदको बनाया ऐसा सुना जाता है। स्मृतिमें चार वेद और एक उपवेद कहे गये हैं। उनमें शिवजीने ब्रह्माजीको गान्धर्ववेद ( नाट्यवेद ) उपवेद बताया। ब्रह्माजीने भी भरत ऋषिको नाट्यवेद बतलाया, भरतने उसका मनुष्य-लोकमें प्रचार किया। इस कारण नाट्यवेदके प्रयोजक शिवजी, ब्रह्माजी और भरत ऋषि माने गये हैं।

महाभाष्यकार पतञ्जलिने भी 'शौभिक', 'शौभिका' और 'शौभनिका' आदि शब्दोंसे भारतमें नाट्यरङ्गकी सत्ताको व्यक्त कर दिया है। महाभाष्यमें ही 'बलिबन्ध' और 'कंसवध' आदि नाटकग्रन्थोंका नामोल्लेख भी देखा जाता है।

हरिवंशमें भी रामायणकी कथाके अभिनयका उल्लेख देखा जाता है।

इतिहाससे ज्ञात होता है कि मगधराज बिम्बसारने नागराजका सम्मान करनेके लिए नाटकका अभिनय कराया था। बुद्धदेवने भी अपने अनुशासनमें 'नाट्याऽभिनय नहीं करना चाहिए' ऐसा उपदेश दिया है।

विक्रमके प्रथम शतक वा मतभेदसे पञ्चम शतकमें वर्तमान महाकवि कालिदासने भी अपने कुमारसम्भव महाकाव्यमें लिखा है कि—

तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम्।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताऽङ्गहारम् ॥ ७-९१ ॥

अर्थात् विवाहके अनन्तर पार्वती और महादेवने सर्वप्रथम मुख, प्रतिमुख आदि सन्धियोंमें कैशिकी आदि वृत्तियोंसे सम्पन्न, शृङ्गार आदि रसोंमें वसन्त आदि रागोंसे समन्वित तथा सुन्दर अभिनयसे युक्त अप्सराओंके नाटकको कुछ समय तक देखा।

भारतके वाराणसी आदि अनेक स्थानोंपर 'भरतमिलाप'का अभिनय प्राचीन समयसे आरब्ध होकर अभी तक चल रहा है। इसी प्रकार 'इन्द्र-सभा'के नामपर अनेकाऽनेक अभिनय पहले हुआ करते थे।

आज भी मथुरामें रास तथा बङ्गालमें यात्रा बराबर होती रहती है।

अति पुरातन कालसे आर्य संस्कृतिके पालक नेपालमें श्रावणी पूर्णिमाकी

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनन्तरवर्तिनी प्रतिपत्में 'गोयात्रा'के नामपर अनेक छोटे-छोटे नाटकीय
अंशोंका तथा भाद्रकृष्णाष्टमी को 'लारवेयात्रा'के नामपर कंसवधका अभिनय
होता है।

नाटकमें संगीतके तीनों अङ्गों—गीत, नृत्य और वाद्य—का यथास्थान
संनिवेश होनेसे गुजरातमें आजकल भी गानेवालेको 'भरत' कहा करते हैं।

इस प्रकार इयत्तारहित अत्यन्त प्राचीन समयसे लेकर भारतवर्षके वेद,
शास्त्र और लोक-व्यवहार इन तीनों स्थानोंसे नाटककी स्वतन्त्र रूपसे
उत्पत्ति प्रमाणित होती है। इस स्थितिमें नाटकका सर्वप्रथम प्रादुर्भाव यवन
देश ( ग्रीस या यूनान ) से हुआ। भारतीय, बैक्ट्रिया ( Bactria ) में ग्रीक
नाटकोंके अभिनयोंको देखने जाते थे, वहींसे उन्होंने नाटककी रचना एवम्
अभिनयका प्रकार सीख लिया—यह यूरोपके विद्वानोंका मत निःसार
प्रतीत होता है।

यवन देशसे भारतमें नाटकका निर्गम होनेसे उसमें प्रयोग किया जाने
वाला 'यवनिका' शब्द चल पड़ा है—यूरोपीय विद्वानोंका यह मत भी आश्रया-
सिद्धिसे ग्रस्त होनेके कारण अग्राह्य है। किसी भी संस्कृत नाटकमें परदेके अर्थमें
यवनिका शब्द प्रयुक्त नहीं देखा जाता है, उस अर्थमें प्रयोज्य शुद्ध शब्द
जवनिका वा यमनिका है, यवनिका नहीं। संस्कृत व्याकरणके अनुसार यवनिका
पदका अर्थ यवनस्त्री होता है, परदा नहीं।

इस मतकी अग्राह्यता-निदर्शक एक और बात है जो कि इसकी नींवको
ही हिला देती है, वह है यवन देशके नाटकमें परदेका अभाव। जब
यवन देशके नाटकमें जवनिका ही नहीं तो संस्कृत नाटकमें जवनिकाका
प्रसार यवन नाटकसे कैसे हुआ? तब इसी आधारपर स्थित 'यवनोंसे
भारतीयोंने नाटककी रचना और अभिनयका प्रकार सीख लिया' यह बात भी
आमूलचूड मिथ्या ही प्रतीत होती है।

संस्कृत नाटकमें बहुत सी विशेषताएँ दृष्टिगोचर होती हैं। उसमें ग्रीक
नाटकके समान देश और कालकी एकता आवश्यक नहीं है, अर्थात् संस्कृत
नाटककी घटना बहुकालव्यापिनी तथा अनेक स्थानोंमें संघटित भी हो
सकती है। दीर्घ समयमें सभी घटनाओंका अभिनय न होकर खास-खास

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

घटनाओंका एक मात्र अभिनय प्रदर्शित होता है। सामान्य घटनाएँ नाटकमें उल्लिखित व्यक्तियोंके मुखसे आवश्यकताके अनुसार प्रकाशित की जाती हैं। महाकवि भवभूतिके महावीरचरित और उत्तररामचरित नाटक इसके मुख्य दृष्टान्त हैं। बारह वर्षोंसे अधिक कालकी घटनावली इसमें सन्निवेशित है।

दूसरी विशेषता यह है कि नाटकमें उल्लिखित व्यक्तिगण अपने पद तथा मर्यादाके अनुसार भाषाका व्यवहार करते हैं। राजा, ब्राह्मण, शिक्षित और पदस्थ व्यक्ति-वर्ग संस्कृत भाषाका एवम् स्त्री, भृत्य और चाण्डाल आदि व्यक्तिगण प्राकृत भाषाका व्यवहार करते हैं। प्राकृत बोलनेवालोंमें भी तारतम्यके अनुसार उसके अनेक भेदोंका प्रयोग किया जाता है। नाटकके वास्तविक जीवनका अनुकारक होनेसे ऐसा नियम रहा होगा, ऐसा अनुमान किया जाता है।

विदूषककी सत्ता संस्कृत नाटककी तीसरी विशेषता है। नाटकमें विदूषक साधारणतः नायकका प्रिय वयस्य, मिष्टान्नलोलुप एवम् परिहासप्रिय ब्राह्मण होता है। विदूषक अपनी चेष्टा, रहस्यपूर्ण वाक्य और निर्बुद्धिताकी प्रतीति कराकर केवल हास्य रसकी ही पुष्टि कर नाटककी सजीवताकी रक्षा और दर्शकका मनोरञ्जन करता है। इतना ही नहीं, वह कभी-कभी नायकका नर्मसुहृत् बनकर अभीष्ट-साधनमें सहायता एवम् नायकके मनोभावोंको अभिव्यक्त करता है।

सुखान्त ( Comedy ) ही होना संस्कृत नाटककी चौथी विशेषता है, इसके विपरीत ग्रीक नाटक सुखान्त और दुःखान्त ( Tragedy ) भी होते हैं।

परिमाणमें अधिकता संस्कृत नाटककी पांचवीं विशेषता है। ग्रीक नाटकोंमें प्रायः तीन अङ्क होते हैं। इसके विपरीत संस्कृत नाटकमें पाँचसे लेकर दश अङ्क तक होते हैं। इस प्रकार हमलोग संस्कृत नाटकमें ग्रीक नाटकोंसे बहुत कुछ विभिन्नता पाते हैं।

हाँ, अलबत्ता संस्कृतके बहुत नाटकोंकी समानता इंगलैण्डके नाटककार शेक्सपियर ( Shakespeare ) के नाटकोंके साथ है, परन्तु शेक्सपियरके समयको देखकर संस्कृत नाटकोंपर यूरोपीय नाटकोंका प्रभाव पड़नेकी बात स्वीकृत नहीं हो सकती; भले ही यूरोपने इस विषयमें भारतका अनुकरण कर लिया हो।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

अभिज्ञानशाकुन्तलकी प्रस्तावनाका अनुकरण जर्मन महाकवि तथा दार्शनिक गोथे ( Gothe ) ने अपने फाष्ट नामके नाटकमें किया है।

साहित्यमें नाटकका स्थान बहुत ही मनोरञ्जक है, अत एव कहा भी गया है कि—'काव्येषु नाटकं रम्यम्' तथा 'नाटकान्तं कवित्वम्'। अर्थात् काव्योंमें नाटक मनोहर होता है और कवित्वका पर्यवसान नाटकमें है। यद्यपि कुशल कलाकार साहित्यके किसी भी क्षेत्रमें असाधारण जौहर दिखा सकता है, जिससे कि उसकी कृति युगान्तस्थायिनी होकर अमर रूपमें रहती है; तथाऽपि इतर काव्य केवल श्रव्य होनेसे उतने हृदयाकर्षक नहीं होते और न उनका प्रभाव ही उतना स्थायी रह सकता है। इसके विपरीत नाटकके दृश्य और श्रव्य होनेसे वह अतिशय रमणीय होता है और उसका प्रभाव भी चिरस्थायी रहता है। इस प्रकार कवि अपने उद्देश्यकी पूर्तिमें सफल होता है। इसी कारण महाकवि कालिदासने अपने अभिज्ञानशाकुन्तलसे और महाकवि भवभूतिने अपने उत्तररामचरित नाटकसे भारतवर्षमें ही नहीं, देशान्तरमें भी निरतिशय ख्यातिलाभ किया।

नाटकका प्रयोजन बहुत ही महत्त्वपूर्ण है। वेदमें स्त्री और शूद्रोंका अधिकार नहीं है परन्तु नाटकमें सबका अधिकार है, इसीलिए उसको आचार्य भरतने 'सार्ववर्णिक वेद' कहा है।

नाटकमें अनेक विषयोंका समावेश होनेसे उसका क्षेत्र बहुत ही व्यापक है। कवि कालिदासने उसे भिन्न रुचिवाले मनुष्योंके मनोरञ्जनका साधन कहा है।

आचार्य भरत निम्नलिखित शब्दोंमें नाटकका उद्देश्य बतलाते हैं—

'उत्तमाऽधममध्यानां नराणां कर्मसंश्रयम्।
हितोपदेशजननं धृतिक्रीडासुखादिकृत्॥ ११४॥
दुःखार्तानां समर्थानां शोकार्तानां तपस्विनाम्।
विश्रान्तिजननं काले नाट्यमेतन्मया कृतम्॥ ११५॥

( नाट्यशास्त्र, अध्याय १ )

अर्थात् उत्तम, मध्यम और अधम मनुष्योंके कर्मका प्रदर्शन कर हितोपदेश करना, धैर्य, क्रीड़ा और सुख आदिको उत्पन्न करना, दुःखसे

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पीडित, समर्थ, शोकपीडित और तपस्वी, इनको उचित अवसरपर विश्राम देने ( मनोरञ्जन करने ) के लिए मैंने नाट्यवेदकी रचना की है ।

इस प्रकार साहित्यमें नाटकका स्थान अतिशय महत्त्वपूर्ण है ।

संस्कृत साहित्यमें यद्यपि बहुतसे नाट्यकार हैं, परन्तु उनमें महाकवि कालिदास और भवभूति ही श्रेष्ठ हैं ।

इन दोनोंमें कौन श्रेयान् हैं यह कहना बहुत मुश्किल है । कालिदास शृङ्गारमें अपनी सानी नहीं रखते हैं, तो भवभूति भी करुण रसमें अनुपम हैं । दोनों महाकवियोंकी कवित्वशक्ति उत्कृष्ट है । दोनोंके नाटकोंमें ध्वनिकी गम्भीरता है, परन्तु कालिदासके नाटक साधारणतः व्यञ्जनाप्रधान हैं, तो भवभूति भी अभिधा शक्तिके द्वारा अन्तर्जगत् और बहिर्जगत्का जैसा चित्रण करते हैं उसका कोई भी मुकाबला नहीं कर सकता । कालिदास जिस समय और जिस अवस्थामें जीवन-यात्रा करते थे उन्होंने उसके केवल उज्ज्वल अंशका ही चित्रण किया है । उनकी कृति से जो अनिर्वचनीय आनन्द और शान्तिकी धारा अविराम गतिसे प्रवाहित होती है उससे स्वतः यह बात प्रतीत होती है कि आमोद और प्रमोद ही उनके अन्तःकरणका आधारस्थान था । उनके हृदयमें दुःख अपने गम्भीर चिह्नको स्थापित करनेके लिए कामयाब नहीं हो सका था । कालगतिसे दुःख वा करुणाकी भी उन्हें कभी-कभी अनुभूति होती थी परन्तु चिरस्थायी रूपसे वे उनके मर्मस्थलको क्षुण्ण नहीं कर सके थे । इसीलिए वे दुःखके भार-को फेंककर विदूषकके साथ हास-परिहास कर सकते हैं । उनके सभी नाटकोंमें विदूषक विद्यमान है और वह मनोरञ्जनके द्वारा हमारे हृदयको आकृष्ट करता है ।

इसके विपरीत भवभूतिकी जीवन-भित्ति दुःखके ऊपर प्रतिष्ठित है । वे कभी भी दुःखके भारको नहीं हटा सके । दुःख छायाके समान उनका अनुसरण करता रहा । भवभूतिने जिस युगमें जन्म लिया था वह था भारतका अवनतियुग । राष्ट्रगगन दुर्दैवमेघसे आच्छन्न था । बौद्ध धर्मके अवसाद-युगमें नाना प्रकारके भीषण और अलौकिक क्रियाकलापकी प्रधानता थी । अनुमान किया जाता है कि भवभूति अपने जीवनकालमें अपनी विद्वत्ता और कवित्वके अनुरूप प्रतिष्ठा-लाभ नहीं कर पाये थे । वे

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

कभी उज्जयिनी में रहते थे तो कभी कान्यकुब्ज (कन्नौज) में, परन्तु महानुभूति भवभूतिको कभी भी अविराम गतिसे सुखाऽनुभूति नहीं हुई, ऐसा प्रतीत होता है। उनका 'जीवनकुसुम' सम्भवतः बहुत समय तक 'म्लान' ही रहा। इसी कारण वे प्रधान रूपसे करुण रसके मुख्य कवि हो गये हैं। उनसे अङ्कित तृप्ति, सुख और आनन्दके बीचमें भी विषादका चिह्न दृष्टिगोचर होता है। कष्टपूर्ण सुदीर्घ वनवासके अनन्तर राजपदमें प्रतिष्ठित होकर सीताके साथ विश्राम-सुखके अनुभवमें भी हम कविनिबद्ध वक्ता रामके मुखसे—

'विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा'। (१–३५)

'जीवत्सु तातपादेषु नूतने दारसंग्रहे'। (१-१९)

इत्यादि मर्मस्पर्शी वाक्य सुनते हैं।

उत्तररामचरितका प्रथम चित्रदर्शनाङ्क साहित्यमें अनुपम और लोकोत्तर सृष्टि है। सुखकी अनुभूतिके समयपर व्यतीत दुःखपूर्ण घटनावली चित्रपटके रूपपर कमनीय कथोपकथनके द्वारा सजीव रूपसे प्रदर्शित की जा रही है। भवभूतिका स्नेह, प्रेम और बन्धुत्व अत्यन्त गम्भीर है।

वाल्मीकिरामायणमें सीता-परित्यागको पढ़कर कोई भी व्यक्ति आँसुओंको नहीं रोक सकता है। भवभूतिने करुणा रसकी परा काष्ठाका प्रदर्शन करनेके लिए अपनी सम्पूर्ण कवित्व-शक्तिको केन्द्रित कर दिया है। पुञ्जीभूत पाषाणको विदीर्ण कर रामचन्द्रजीका अगाध पत्नीप्रेम और अतल दुःख-प्रवाह फूट पड़ा है। वासन्तीके तिरस्कारमें और कुश–लवके साथ कथोपकथनमें रामचन्द्रजीका दुःखसागर उमड़ पड़ा है।

कालिदासके रघुवंशमें इस कारुण्य-गङ्गाने अपने प्रवाहसे दोनों तटोंको जलमय मात्र कर दिया है परन्तु भवभूतिका रस अतलस्पर्शी समुद्रके समान बनकर निरतिशय दुःखकी गम्भीरताको प्रकाशित कर रहा है।

कालिदासने नगर, राजसभा, स्वयंवर, समुद्र, विमानयात्रा, छः ऋतु और शकुन्तला-प्रेषण आदि विषयोंका जो वर्णन किया है वह अतिशय मनोहर है। उन्होंने प्रकृति देवीकी अनावृत मनोरम मूर्तिका साक्षात्कार कर लिया था, परन्तु महाकवि भवभूतिको प्रकृतिकी भीषण और प्रशान्त गम्भीर मूर्ति भी हृदयङ्गम हुई थी। दण्डकारण्यके दृश्योंका वर्णन इसका प्रमाण है।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कालिदासके काव्य और नाटकमें वैदर्भी रीतिका अवलम्बन किया गया है, परन्तु भवभूतिने इसके विपरीत गौडी रीतिका ही अधिकतर आश्रय लिया है। इसके साथ-साथ जहाँ कहीं भी इन्होंने वैदर्भी रीतिका प्रदर्शन किया है वह अतिशय मनोरम है।

इसी प्रकार कालिदासने जहाँ वहिर्जगतके अति मनोरम दृश्यको कल्पना-कूर्चिकासे अङ्कित किया है वहाँ भवभूतिने उसके साथ-साथ वहिर्जगत्के भयानक और वीभत्स दृश्य एवम् मानव-मनोवृत्तिके भिन्न-भिन्न रूपोंको असाधारण कौशलसे प्रकाशित किया है।

कालिदासने जहाँ आदिरस शृङ्गारको प्रस्तुत करनेमें अपनी कल्पना-की अनुपम निपुणता दिखलाई है वहाँ भवभूतिने भी करुण और वीर रसको प्रदर्शित करनेमें अपनी सानी नहीं रक्खी है। जहाँ कालिदास नारीके चित्रण-में उनके सौन्दर्यवर्णनमें ही मस्त हैं वहाँ भवभूति उनकी हृदय-पवित्रताको उपस्थित करनेमें ही व्यस्त हैं। अतएव कालिदास नारीको 'तुङ्गस्तनी' 'विम्वा-धरा' 'श्रोणीभारादलसगमना' कहकर अपनी प्रसुप्त वासनाको व्यक्त कर रहे हैं वहाँ भवभूति उन्हें 'गेहे लक्ष्मीः' और उनके वचनको 'कर्णामृतानि', स्पर्श-को 'सञ्जीवनौषधिरसः', 'स्नेहार्द्रशीतलः' और उनके आलिङ्गनको 'सुखमिति वा दुःखमिति वा' कहकर अपनी हृदयकी पवित्रताको व्यक्त करते हैं। इसी तरह नारी जहाँ कालिदासकी दृष्टिमें 'भोग्या' प्रतीत होती है वहाँ भवभूति उन्हें 'पूजायोग्या' मानते हैं। सूक्ष्म दृष्टिसे निरीक्षण करनेपर दोनों महा-कवियोंमें वहुत अन्तर उपलब्ध होता है।

महाकवि भवभूतिकी तीन रचनाएं उपलब्ध हैं। ये तीनों ही रूपकके रूपमें वर्तमान हैं। इनमें महावीरचरित और उत्तररामचरित ये दो नाटक हैं जो मर्यादापुरुषोत्तम भगवान् श्रीरामचन्द्रके यथाक्रम पूर्वचरित और उत्तरचरित-का प्रदर्शन करते हैं। तीसरा मालतीमाधव प्रकरणके रूपमें विद्यमान है।

## महाकवि भवभूति

महाकवि कालिदासने अपना परिचय देनेमें जैसी उपेक्षा दिखाई है, नाटककार भवभूतिने वैसी उपेक्षा नहीं दिखाई। इनकी उक्तिके अनुसार इनका परिचय दिया जाता है। दक्षिणमें विदर्भ (बरार) के अन्तर्गत पद्मपुर

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


नगरमें कृष्णयजुर्वेदी तैत्तिरीयशाखावाले काश्यपगोत्रीय पङ्क्तिपावन पञ्चाऽग्नि-पूजक उदुम्बर उपाधिवाले ब्रह्मवादी ब्राह्मण लोग रहते थे। इनके कुलमें उत्पन्न भट्ट गोपालके पौत्र और नीलकण्ठके पुत्र श्रीकण्ठ ही हमारे उत्तररामचरित नाटकके रचयिता हैं। इनकी माताका नाम जातुकर्णी था। विशिष्ट काव्य-रचनासे इन्हें 'भवभूति' उपाधि प्राप्त हुई थी, जिसने कि अतिशय ख्यातिके कारण कालान्तरमें नामका स्थान प्राप्त कर लिया।

भवभूतिने अपनेको 'पदवाक्यप्रमाणज्ञ' लिखा है, इससे प्रतीत होता है कि ये व्याकरण, मीमांसा और न्यायशास्त्रके विद्वान् थे। इन्होंने अपने गुरुका नाम ज्ञाननिधि लिखा है।

मालतीमाधवकी एक प्राचीन हस्तलिखित प्रतिसे ज्ञात होता है कि ये मीमांसाशास्त्रके धुरन्धर विद्वान् कुमारिल भट्टके भी शिष्य थे और इनका दूसरा नाम उम्वेकाचार्य भी था। विशेष वात संस्कृतकी भूमिकामें देखें।

भवभूतिके समय और चरित्र आदिके विषयमें इनके ग्रन्थसे इससे अधिक ज्ञात नहीं होता।

महाकवि कल्हणकी राजतरङ्गिणीके अनुसार भवभूतिके आश्रयदाता कान्यकुब्जेश्वर यशोवर्मा काश्मीरनरेश मुक्तापीडललितादित्यके अधीन थे ऐसा मालूम होता है। यशोवर्माका समय विक्रम संवत् ७५७ प्रमाणित होता है, फलतः भवभूतिका भी वही समय मानना संगत है।

अब उत्तररामचरित और उसके कर्ता महाकवि भवभूतिकी कुछ विशेषताओं-का उल्लेख किया जाता है।

भवभूतिने प्रस्तावनामें अपने परिचयके प्रसङ्गमें सूत्रधारके द्वारा 'पद-वाक्यप्रमाणज्ञ' विशेषणके साथ—

'यं ब्रह्माणमियं देवी वाग्वश्येवाऽनुवर्तते'।

इस वाक्यका प्रतिपादन किया है। संस्कृत भाषापर इनका पूर्ण अधिकार देखकर इस उक्तिको सत्य मानना पड़ता है। इसमें लेशमात्र भी अतिशयोक्ति नहीं है।

कर्तव्यपालनमें महाकविको पूर्ण आस्था थी। लोक भले ही दोषारोपण करे पर कुछ भी परवाह न करते हुए अपने कर्तव्यको करना चाहिए, इसी बात-को उन्होंने सूत्रधारसे प्रस्तुत कराया है—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः॥ (१—५)

ऋषियोंकी सर्वशक्तिमत्तापर नाटककारको अतिशय विश्वास था। कितने जोरदार शब्दोंमें ये रामचन्द्रजीके मुखसे इस बातको उपस्थापित कराते हैं—

लौकिकानां हि साधूनामर्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति॥ (१—१०)

महाकवि लोकके आराधनके लिए रामके लोकोत्तर त्यागको उन्हींकी उक्तिके रूपमें कैसे असाधारण रूपमें प्रस्तुत करते हैं—

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नाऽस्ति मे व्यथा॥ (१-१२)

माता-पिताके जीवन-कालमें दारपरिग्रहके अनन्तर होनेवाले सुखकी अनिर्वचनीयताको भवभूति रामचन्द्रजीकी ही उक्तिमें किस तरह प्रदर्शित कर रहे हैं—

जीवत्सु तातपादेषु नूतने दारसंग्रहे।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः॥ (१-१९)

कर्मकाण्डप्रवीण ख्यातनामा मीमांसक होकर भी महाकवि स्त्री-शिक्षाके पक्षपाती थे। उन्होंने इस बातको आत्रेयीके द्वारा इस प्रकार प्रदर्शित किया है—

अस्मिन्नगस्त्यप्रमुखाः प्रदेशे भूयांस उद्गीथविदो वसन्ति।
तेभ्योऽधिगन्तुं निगमान्तविद्यां वाल्मीकिपार्श्वादिह पर्यटामि॥ (२-३)

महापुरुषोंकी मनोवृत्तिकी असाधारणता महाकविने वासन्तीके द्वारा किस तरह प्रभावजनक शब्दोंमें प्रस्तुत की है—

वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति॥ (२-७)

भवभूतिके नाटकमें निबद्ध शम्बूकनामक शूद्र भी—

सत्सङ्गजानि निधनान्यपि तारयन्ति। (२-११)

ऐसा कहता हुआ किस प्रकार विनम्र रूपसे सत्सङ्गतिकी प्रशंसा करता है।

प्रियजनकी विशेषताको महाकवि रामके द्वारा कैसे आकर्षक शब्दोंमें प्रस्तुत करते हैं—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ( २–१९ )

भवभूति पतिपरित्यक्ता सतीशिरोमणि सीताकी दयनीय अवस्थाको तमसाके द्वारा कैसे मर्मस्पर्शी शब्दोंमें प्रतिपादित कर रहे हैं—

परिपाण्डुदुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम् ।
करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी ॥ (३–४)

महाकविने तमसाके द्वारा अपत्यका कितना मनोहर चित्रण किया है—

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति पठ्यते ॥ ( ३–१७ )

वासन्ती सीताके निर्वासनपर रामचन्द्रको कैसे मार्मिक शब्दोंसे आक्षेप अलङ्कारके द्वारा आक्षेप कर रही है—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमतः परेण ॥ ( ३–२६ )

महाकविने राजर्षि जनकके द्वारा महारानी कौशल्याकी दीनताका कैसे कारुणिक शब्दोंमें प्रदर्शन किया है—

आसीदियं दशरथस्य गृहे यथा श्रीः
श्रीरेव वा किमुपमानपदेन सैषा ।
कष्टं बताऽन्यदिव दैववशेन जाता
दुःखात्मकं किमपि भूतमहो ! विकारः ॥ ( ४–६ )

महाकविने वटुओंके अश्ववर्णनसे किस प्रकार स्वभावोक्तिपूर्वक हास्यरसकी अवतारणा की है—

पश्चात्पुच्छं वहति विपुलं, तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति, खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति, प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं व्याख्यानैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥ ( ४–२६ )

रक्तसम्बन्धके कारण होनेवाले स्वाभाविक स्नेहको महाकविने स्वनिबद्ध वक्ता लव और चन्द्रकेतु द्वारा कितने मनोरम शब्दोंमें उपस्थित किया है—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


यदृच्छासंवादः किमु गुणगणानामतिशयः
पुराणो वा जन्मान्तरनिबिडबद्धः परिचयः।
निजो वा सम्बन्धः किमु विधिवशात्कोऽप्यविदितो
ममैतस्मिन्दृष्टे हृदयमवधानं रचयति ॥ (५-१६)।

महाकवि भवभूतिने विद्याधरके द्वारा विवर्तवादका प्रदर्शन कितने सुन्दर ढङ्गसे किया है—

विद्याकल्पेन मरुता मेघानां भूयसामपि।
ब्रह्मणीव विवर्तानां क्वाऽपि प्रविलयः कृतः ॥ (६-६)

महाकविने लवके द्वारा भगवान् रामके लोकोत्तर प्रभावका कैसे आकर्षक शब्दोंमें वर्णन किया है—

विरोधो विश्रान्तः, प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वाऽपि व्रजति, विनयः प्रह्वयति माम्।
झटित्यस्मिन्दृष्टे किमिति परवानस्मि, यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ (६-११)

पृथिवी कैसे मर्मस्पर्शी शब्दोंमें रामकी अयुक्तकारिताका प्रदर्शन करती हैं—

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः।
नाऽहं न जनको नाऽग्निर्न तु वृत्तिर्न सन्ततिः ॥ (७-५)

इस प्रकार इस नाटकरत्नकी आपातरूपसे प्रतीयमान कुछ ही विशेषताओं-का उल्लेख किया गया है। पूरे ग्रन्थपर प्रकाश डालनेके लिए तो स्वतन्त्र निबन्ध अपेक्षित है, इसलिए यहींपर अवसान करता हूँ।

विद्वद्विधेय—
**शेषराज शर्मा**

दुर्गाघाट, वाराणसी
दीपावली, सं० २०१३

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

लवः—अन्यच्च चन्द्रकेतो ! सुजनः स राजर्षिः श्रूयते । (सलज्जमिव ।)

यदि च वयमप्येवंप्राया: क्रतुद्विषतामरौ *

क इव न† गुणैस्तं राजानं जनो[]बहु मन्यते ।

तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां

नेनाऽभिमानः, सम्भाषणमार्दवेन च विनयोऽपि प्रदर्शित इति भावः । अयं = लवः, अस्य = रामभद्रस्य, अभिष्यन्दयेत् = प्रस्तुतं कारयेत् ।

**लव इति ।** राजर्षिः = राजा चाऽसौ ऋषिः, राजत्वे सत्यपि ऋष्याचारपरिग्रहाद्राजर्षिरिति भावः, सुजनः = सज्जनः । सलज्जमिव = सव्रीडमिव, सलज्जत्वं च महापुरुषरामस्य यज्ञकर्मणि प्रतिबन्धकत्वाज्ज्ञेयम् ।

**यदि चेति ।** यदि च क्रतुद्विषताम्, अरौ वयम् अपि एवंप्रायाः, क इव जनः गुणैः तं राजानं न बहु मन्यते ? तदपि तुरङ्गमरक्षिणां स व्याहारः अखिलक्षत्राक्षेपप्रचण्डतया मे विकृतिम् अकरोत् खलु इत्यन्वयः । यदि च = यद्यपि, क्रतुद्विषताम्=यज्ञघातुकानां, राक्षसादीनामित्यर्थः, अरौ=शत्रौ, शासक इति भावः, वयम् अपि = अहमपीत्यर्थः, 'अस्मदो द्वयोश्च' इति बहुवचनम् । एवंप्रायाः = एतादृशाः, प्रेमपात्रभूता इति भावः । पुस्तकान्तरेषु तु 'क्रतुद्विषतामरौ' इत्यत्र 'क्रतुप्रविघातिन' इति पाठस्तत्र—वयमपि न खलु एवंप्रायाः क्रतुप्रविघातिन इत्यन्वयः, क्रतुप्रविघातिनः = यज्ञनाशका इत्यर्थः । क इव जनः = को वा नरः, गुणैः = दयादाक्षिण्यादिभिः, तं = पूर्वोक्तं, राजानं = रामचन्द्रं, न बहु मन्यते = न अधिकम् आद्रियते, सर्वे जना रामचन्द्रमाद्रियन्त इति भावः । यद्येवं तर्हि कथं श्रीमता रामस्याऽश्वो गृहीत इत्यत्राह—**तदपीति ।** तदपि = तथाऽपि, रामस्य सर्वादृतत्वेऽपीति भावः, तुरङ्गमरक्षिणाम् = अश्वरक्षकाणां, सः = पूर्वोक्तः, व्याहारः

लव—और भी चन्द्रकेतो ! 'वे राजर्षि ( रामचन्द्र ) सज्जन हैं' ऐसा सुना जाता है ( लज्जितकी तरह होकर ) ।

यद्यपि यज्ञद्वेषियों ( दैत्यों ) के शत्रु रामचन्द्रजीमें हमलोग भी प्रीति करनेवाले हैं । कौन पुरुष गुणोंके कारण उन राजाको अधिक आदर नहीं करता है, तथाऽपि घोड़ेके रक्षकोंकी

* 'वयमपि न खल्वेवं प्रायाः क्रतुप्रविघातिनः' इति पाठान्तरम् । अयमेव पाठः साधीयान्, ( सं० )

† 'इह च' इति पाठान्तरम् । [] 'नवा' इति पाठान्तरम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri 

विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाऽकरोत् ॥ २८ ॥

चन्द्रकेतुः—किन्तु भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः ?

लवः—अस्त्विहामर्षो मा भूद्वा । अन्यदेतत्पृच्छामि । दान्तं हि राजानं राघवं शृणुमः । स किल नात्मना दृप्यति, नाप्यस्य प्रजा वा दृप्ता जायन्ते । तत्किं मनुष्यास्तस्य राक्षसीं वाचमुदीरयन्ति ?

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः ।

---

वचनं 'योऽयमश्वः पताका वा' इत्याकारकमिति (२५४ तमे पृष्ठे) भावः, अखिलक्षत्राक्षेपप्रचण्डतया = अखिलाः (संपूर्णाः) ये क्षत्राः=क्षत्रियाः, तेषाम् आक्षेपः = तिरस्कारः, तेन हेतुना प्रचण्डतया = क्रूरतया, मे = मम, विकृतिं = विकारं, मन्युमित्यर्थः, अकरोत् = अजीजनत् । समस्तानां क्षत्रियाणां तिरस्कारस्याऽसह्यत्वेनैव मयाऽश्वोऽयमपहृतो न तु कारणान्तरेणेति भावः । अत्राऽर्थापत्त्यलङ्कारः । हरिणी वृत्तम् ॥ २८ ॥

**चन्द्रकेतुरिति ।** तातप्रतापोत्कर्षे = तातस्य ( पितुः, रामचन्द्रस्येत्यर्थः ) प्रतापस्य = तेजसः, उत्कर्षे = प्रकर्षे, अमर्षः = असहिष्णुता ।

**लव इति ।** इह=अस्मिन्, रामचन्द्र इत्यर्थः, मा भूद्वा = न भवेद्वा, 'माङि लुङ्' इति लङ्, 'न माङ्योगे' इत्यडभावः । अन्यत् = अपरम् । राघवं=रामचन्द्रं दान्तम्=निरहङ्कारमित्यर्थः, शृणुमः=आकर्णयामः । सः=राघवः, आत्मना=स्वयम्, न दृप्यति = न दर्पं करोति, दृप्ताः = दर्पयुक्ताः । तस्य = राघवस्य, राक्षसीं=रक्षःसम्बन्धिनीं, वाचं=वाणीं, दर्पयुक्तां वाणीमिति भावः, उदीरयन्ति = उच्चारयन्ति ।

**ऋषय इति ।** ऋषय उन्मत्तदृप्तयोः वाचं राक्षसीम् आहुः, सा सर्ववैराणां योनिः, सा लोकस्य निष्कृतिः हिं इत्यन्वयः । ऋषयः = मुनयः, उन्मत्तदृप्तयोः = विक्षिप्तगर्वितयोः, वाचं = वाणीं, राक्षसीं = रक्षःसम्बन्धिनीम्, आहुः = कथयन्ति ।

---

उस उक्तिने संपूर्ण क्षत्रियोंके तिरस्कारसे क्रूरताके कारण मेरे विकारको उत्पन्न कर दिया है॥२८॥

चन्द्रकेतु—क्या पिताजीके प्रतापके उत्कर्षमें भी आपको असहनीयता है ?

लव—उनमें असहनीयता हो या न हो । और यह पूछता हूँ—'राजा रामचन्द्र निरहङ्कार हैं' ऐसा हम सुनते हैं । वे स्वयम् अहङ्कार नहीं करते हैं और न उनकी प्रजायें ही अहङ्कारयुक्त होती हैं; तब क्यों उनके मनुष्य राक्षसी वाणी बोलते हैं ?

ऋषि लोग उन्मत्त और अहङ्कारी पुरुषकी वाणीको 'राक्षसी' कहते हैं, वह सम्पूर्ण



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri 

सा योनिः सर्ववैराणां सा हि लोकस्य निष्कृतिः ॥ २९ ॥

इति ह स्म तां निन्दन्ति । इतरामभिष्टुवन्ति ।

**कामं दुग्धे, विप्रकर्षत्यलक्ष्मीं, कीर्तिं सूते, दुर्हृदो निष्प्रलाति ।**
**शुद्धां शान्तां मातरं मङ्गलानां धेनुं धीराः सूनृतां वाचमाहुः ॥ ३० ॥**

सा=राक्षसी वाक्, सर्ववैराणां = सकलविरोधानां, योनिः = कारणं, सा = राक्षसी वाक्, लोकस्य = जनस्य, 'लोकस्तु भुवने जने' इत्यमरः, निष्कृतिः = परिभवहेतुः, **'निर्ऋतिः'** इति पाठे अलक्ष्मीरित्यर्थः, 'स्यादलक्ष्मीस्तु निर्ऋतिः' इत्यमरः। अत्र **रूपकाऽलङ्कारः** ॥ २९ ॥

**इतीति** । इति ह स्मेति प्रसिद्धिद्योतकोऽव्ययसमूहः । तां = राक्षसीं वाचम् । इतरां = राक्षस्या वाचोऽन्यां, वक्ष्यमाणस्वरूपामिति भावः, अभिष्टुवन्ति = प्रशंसन्तीति भावः ।

**काममिति** । ( इतरा वाक् ) कामं दुग्धे, अलक्ष्मीं विप्रकर्षति, कीर्तिं सूते, दुर्हृदः निष्प्रलाति, ( अतः ) धीराः सूनृतां वाचं, शुद्धां शान्तां मङ्गलानां मातरं धेनुम् आहुः इत्यन्वयः । ( इतरा = सूनृता वाक् ), कामम् = अभिलाषं, दुग्धे = प्रपूरयति, अलक्ष्मीं = निर्ऋतिं, विप्रकर्षति = दूरीकरोति, कीर्तिम् = यशः, सूते = जनयति, दुर्हृदः = दुष्टं हृदयं येषां तान् = शत्रूनित्यर्थः, 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति हृदयस्य हृद्भावः, निष्प्रलाति = अतिशयेन नाशयति, पुस्तकान्तरेषु तु **'दुष्कृतं या हिनस्ति'** इति पाठस्तत्र—या = सूनृता वाक्, दुष्कृतं = पापं, हिनस्ति = नाशयतीत्यर्थः । ( अतः ) धीराः = विद्वांसः, सूनृतां = सत्यप्रियां, 'सूनृतं प्रिये सत्ये' इत्यमरः, वाचं = वाणीं, शुद्धां = दोषशून्यां, शान्तां = पारुष्यरहितां, मङ्गलानां = कल्याणानां, मातरम् = उत्पादयित्रीं, धेनुं = कामधेनुं, तत्तुल्यामिति भावः, आहुः = कथयन्ति । सूनृता वाक् कामधेनुवत् सर्वान् कामान् पूरयतीति भावः । अत्र दोहनाद्यनेकक्रियाणामेककारकत्वाद्दी-

विरोधोंका कारण है और वही ( राक्षसी वाणी ) लोकके तिरस्कारका कारण है ॥ २९ ॥

इससे उसकी निन्दा करते हैं और दूसरी वाणीकी प्रशंसा करते हैं ।

दूसरी ( सत्य और प्रिय ) वाणी अभिलाषको पूर्ण करती है, अलक्ष्मीको दूर करती है, प्रसिद्धिको पैदा करती है और शत्रुओंको विनष्ट करती है । इस कारणसे विद्वान् पुरुष सूनृता ( सत्य और प्रिय ) वाणीको दोषशून्य, कठोरतारहित और कल्याणों की उत्पत्ति करनेवाली कामधेनुके तुल्य कहते हैं ॥ ३० ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

सुमन्त्रः—परिभूतोऽयं बत कुमारः प्राचेतसान्तेवासी । वदत्यय-मभ्युपपन्नामर्षेण संस्कारेण ।

लवः—यत्पुनश्चन्द्रकेतो ! वदसि 'किन्तु भवतस्तातप्रतापोत्कर्षेऽप्य-मर्ष' इति, तत्पृच्छामि 'किं व्यवस्थितविषयः क्षात्रधर्म' ? इति ।

सुमन्त्रः—नैव खलु जानासि देवमैक्ष्वाकम् ! तद्विरमातिप्रसङ्गात् ।

---

पकाऽलङ्कारः । धेनुमित्यत्र कामधेनुसादृश्येन चाऽसम्भवद्वस्तुसम्बन्धा **निदर्शना**, तथा च द्वयोरलङ्कारयोर्मिथो नैरपेक्ष्येण स्थितेः **संसृष्टिः** । **शालिनी** वृत्तम् ॥३०॥

**सुमन्त्र इति** । प्राचेतसाऽन्तेवासी = प्राचेतसस्य ( वाल्मीकेः ) अन्तेवासी= छात्रः, परिभूतः = तिरस्कृतः, **'परिपूतस्वभाव'** इति पुस्तकान्तरपाठस्तत्र— परिपूतः = पवित्रः, स्वभावः = शीलं, यस्य स इत्यर्थः, अभ्युपपन्नाऽमर्षेण = अभ्युपपन्नः ( उत्पन्नः ) अमर्षः = कोपो; यस्य तेन, एतादृशेन संस्कारेण = वासन-या, वदति = परिभाषते, **'अभिसंपन्नमार्षेण संस्कारेण'** इति पुस्तकान्तर-पाठस्तत्र—आर्षेण = ऋषिसम्बन्धिना, संस्कारेण = संस्कृत्या, अनुभूत्येति यावत्, वदति = प्रतिपादयति, 'कामान्दुग्धे' इत्यादीति शेषः ।

**लव इति** । तत्=तत्र, क्षात्रधर्मः=शौर्यादिः, व्यवस्थितविषयः = व्यवस्थितः; ( नियमितः ) विषयः = आश्रयः, यस्य सः, शौर्यादिः क्षात्रधर्मो रामचन्द्रे एव नियतः किमिति भावः ।

**सुमन्त्र इति** । ऐक्ष्वाकम् = इक्ष्वाकुवंशोत्पन्नं, देवं = महाराजं, रामचन्द्र-मित्यर्थः । तत् = तस्माद्धेतोः, अतिप्रसङ्गात्=अनिष्टप्रसञ्जनात्, महावीरे रामेऽपि सावज्ञमसहिष्णुत्वाधिक्यादिति भावः, 'विरमे'तिपदेन योगे 'जुगुप्साविरामप्र-मादार्थानामुपसंख्यानम्' इति पञ्चमी, विरम = विरतो भव ।

---

सुमन्त्र—खेद है, वाल्मीकि ऋषिके शिष्य ये कुमार तिरस्कृत हुए हैं, इसलिए ये क्रोधपूर्ण वासनासे बोल रहे हैं ।

लव—चन्द्रकेतुजी ! जो आप कहते हैं कि 'पिताजीके प्रतापके उत्कर्षमें भी आपको असहनीयता है ?' तो मैं पूछता हूं कि क्षत्रियका धर्म ( शूरता आदि ) क्या एकमें ही रहनेवाला है ?

सुमन्त्र—तुम इक्ष्वाकुवंशोत्पन्न रामभद्रको नहीं जानते हो, इसलिए अनिष्ट प्रसङ्गको छोड़ो !

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सैनिकानां प्रमाथेन सत्यमोजायितं त्वया ।
जामदग्न्यस्य दमने न हि निर्बन्धमर्हसि ॥ ३१ ॥

लवः—( सहासम् । ) आर्य ! जामदग्न्यस्य दमनः स राजेति कोऽयमुच्चैर्वादः ?

सिद्धं ह्येतद्वाचि वीर्यं द्विजानां बाह्वोर्वीर्यं यत्तु तत्क्षत्रियाणाम् ।

---

**सैनिकानामिति ।** सैनिकानां प्रमाथेन त्वया ओजायितं सत्यम् । जामदग्न्यस्य दमने निर्बन्धं न अर्हसि हि इत्यन्वयः । सैनिकानां = सैन्यानां, प्रमाथेन = हिंसनेन, त्वया = लवेन, ओजायितम् = ओजस्विनेव आचरितम्, ओजःशब्दो वृत्तिविषये तद्वति, ततः 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् सलोपश्च, 'अकृत्सार्वधातुकयोर्दीर्घ' इति दीर्घत्वं, ततः क्तः । सत्यम् = एतत्तथ्यमेव परं जामदग्न्यस्य = जमदग्नेरपत्यस्य, परशुरामस्येत्यर्थः, 'दमन' इति पदेन योगे 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी, दमने = दमयतीति दमनस्तस्मिन्, 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणात् कर्तरि ल्युट्, जेतरि रामचन्द्र इत्यर्थः । निर्बन्धं = रूक्षवादं, कथयितुमिति शेषः, न अर्हसि = न योग्यो भवसि, हि = निश्चयेन । 'न हि निर्बन्ध' मित्यत्र **'नैवं निर्वक्तु'**मिति पुस्तकान्तरपाठस्तत्र—एवं = व्यवस्थितविषयः क्षात्रधर्मः इत्येवंरूपेण, निर्वक्तुम् = प्रतिपादयितुम्, शेषं प्राग्वत् । महावीरे रामचन्द्रे तवैतत्कथनं नोचितमिति भावः ॥ ३१ ॥

**लव इति ।** सहासं = हाससहितं, 'जामदग्न्यस्य दमन' इति रामविशेषणश्रवणादिति शेषः, स राजा = रामचन्द्रः, उच्चैर्वादः = महावीरत्वद्योतिकोक्तिः ।

**सिद्धमिति ।** द्विजानां वाचि वीर्यं, यत् बाह्वोः वीर्यं, तत्तु क्षत्रियाणाम्; एतत् सिद्धं हि । जामदग्न्यः शस्त्रग्राही ब्राह्मणः, तस्मिन् दान्ते तस्य राज्ञः का स्तुतिः ? इत्यन्वयः । द्विजानां = ब्राह्मणानां, वाचि = वचने, वीर्यं = पराक्रमः, पराऽभिभाविरूप इति भावः, भवतीति शेषः । यत्, बाह्वोः = भुजयोः, वीर्यं = पराक्रमः, तत्तु क्षत्रियाणां = राजन्यानां, न तु द्विजानामित्यर्थः, ब्राह्मणा मन्त्रबलाः, क्षत्रिया-

---

सैनिकोंको मारनेसे तुमने तेजस्वीकी तरह आचरण किया है, यह सत्य है; परन्तु परशुरामजीको दमन करनेवाले रामभद्रके विषयमें ( कठोर वाणी ) बोलना तुम्हें उचित नहीं है ॥ ३१ ॥

लव—( हास्यके साथ ) आर्य ! वे राजा ( रामचन्द्र ) परशुरामजीको दमन करनेवाले हैं, तो इसमें वीरता की कौन बड़ी बात हुई ?

ब्राह्मणोंका पराक्रम वचनमें होता है, जो भुजाओंका बल है वह तो क्षत्रियोंका है ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


**शस्त्रग्राही ब्राह्मणो जामदग्न्यस्तस्मिन्दान्ते का स्तुतिस्तस्य राज्ञः ?॥३२॥**

**चन्द्रकेतुः—( सोन्माथमिव । ) आर्य सुमन्त्र ! कृतमुत्तरोत्तरेण ।**

**कोऽप्येष संप्रति नवः पुरुषावतारो वीरो न यस्य भगवान्भृगुनन्दनोऽपि ।**
**पर्याप्तसप्तभुवनाभयदक्षिणानि पुण्यानि तातचरितान्यपि यो न वेद ॥३३॥**

---

एवं वाहुवला भवन्तीति भावः, एतत् = द्विजानां वाग्वलत्वं क्षत्रियाणां वाहुवलत्वं च, सिद्धं = प्रसिद्धं, हि = निश्चयेन । जामदग्न्यः = परशुरामः, शस्त्रग्राही = आयुधधारी, ब्राह्मणः = द्विजः, वाग्वलत्वेन शस्त्रग्रहणाऽनधिकारीति भावः । तस्मिन् = तादृशे ब्राह्मणे परशुराम इति भावः, दान्ते=पराजिते सति, तस्य=पूर्वोक्तस्य, राज्ञः = विजेतॄ रामचन्द्रस्य, का स्तुतिः = कः स्तवः, वाग्वलस्य शस्त्रग्रहणानधिकारिणः परशुरामस्य ब्राह्मणस्य विजये का नाम रामप्रशंसेति भावः । अत्र आर्थी **परिसंख्या**ऽलङ्कारः । **शालिनी** वृत्तम् ॥ ३२ ॥

**चन्द्रकेतुरिति** । सोन्माथमिव = पीडासहितमिव, रामचन्द्रं प्रत्याक्षेपादितिशेषः । उत्तरोत्तरेण = उत्तरं प्रत्युत्तरप्रदानेनेत्यर्थः । कृतम् = अलम् , अनेन दुर्विनीतेन वालकेन सह उक्तिप्रत्युक्तिविस्तररूपः संलापो न कर्तव्य इति भावः ।

**कोऽप्येष इति** । सम्प्रति एषः कोऽपि नवः पुरुषावतारः यस्य भगवान् भृगुनन्दनः अपि न वीरः । यः पर्याप्तसप्तभुवनाऽभयदक्षिणानि पुण्यानि तातचरितानि अपि न वेद इत्यन्वयः । सम्प्रति = अधुना, एषः = अतिसमीपस्थोऽयं जनः, कोऽपि=अनिर्वचनीयरूपः, नवः=नूतनः, अपूर्व इति भावः, पुरुषाऽवतारः=पुरुषस्य (नारायणस्य) अवतारः=अवतारविशेषः, अस्तीति शेषः । यस्य = जनस्य, मत- इति शेषः, भगवान् = ऐश्वर्यसम्पन्नः, भृगुनन्दनोऽपि = परशुरामोऽपि, न वीरः = न शूरः, यः त्रिःसप्तकृत्वो वाहुवीर्याणां क्षत्राणां विनाशकं परशुराममपि वीरं न जानाति, स कोऽपि नवः पुरुषाऽवतार इति भावः । यः = अपूर्वः पुरुषः, पर्याप्तसप्तभुवनाऽभयदक्षिणानि = पर्याप्ता ( पूर्णा ) सप्तानां = सप्तसङ्ख्यानाम् , भुवनानाम्=

---

परशुरामजी शस्त्रग्रहण करनेवाले ब्राह्मण हैं, तब उनके पराजित होनेपर उन राजा ( रामचन्द्र ) की क्या बड़ाई है ? ॥ ३२ ॥

**चन्द्रकेतु**—(पीडितकी तरह) आर्य सुमन्त्र ! अब उत्तर-प्रत्युत्तरकी आवश्यकता नहीं है। इस समय ये कोई अपूर्व पुरुषावतार ( नारायणके अवतार-विशेष ) आविर्भूत हो गये हैं, जिनके मतमें भगवान् परशुराम भी वीर नहीं हैं । जो सात लोकोंको पूर्ण अभय दान देनेवाले पिताजी ( रामचन्द्र ) के पवित्र चरित्रोंको भी नहीं जानते हैं ॥ ३३ ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


लवः—को हि रघुपतेश्चरितं महिमानं च न जानाति ? यदि नाम किंचिदस्ति वक्तव्यम् । अथवा शान्तम् ।

**वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते ❀**
**सुन्दस्त्रीमथनेऽप्यकुण्ठयशसो लोके महान्तो हि ते ।**

---

भूरादिलोकानाम् , अभयम् = भयाभावः, एव दक्षिणा = देयपदार्थः, येषु तानि, पुण्यानि = पवित्राणि, तातचरितानि अपि = पितृचरणरामचन्द्रचरित्राणि अपि, न वेद = न जानाति, लोकसप्तकायापि अभयं वितरतः पितृचरणस्य रामचन्द्रस्यासाधारणशौर्यसमन्वितं पुण्यचरित्रमपि यो लोकोत्तरत्वेन न संभावयत्यतोऽयं कोऽप्यपूर्वः पुरुषाऽवतार इति भावः । अत्र **रूपकाऽऽलङ्कारस्य छेकाऽनुप्रासस्य च संसृष्टिः । वसन्ततिलका** वृत्तम् ॥ ३३ ॥

**लव इति** । रघुपतेः = रामचन्द्रस्य, महिमानं = 'महतो भावो महिमा' तं महत्त्वमित्यर्थः, 'पृथ्वादिभ्य इमनिज्वा' इतीमनिच्प्रत्ययः । 'यदि नामे'ति संभावनायाम् । वक्तव्यं = वाच्यम् । शान्तं = पर्याप्तं, न वाच्यमिति भावः । शान्तमिति कथयित्वापि किञ्चिद्विवृणोति ।

**वृद्धा इति** । हुं वर्तते, वृद्धाः विचारणीयचरिताः न तिष्ठन्तु, सुन्दस्त्रीमथनेऽपि अकुण्ठयशसः ते लोके महान्तो हि, खरायोधने यानि त्रीणि, कुतोमुखानि पदानि अपि आसन् , वा इन्द्रसूनुनिधने यत् कौशलं, तत्र अपि जनः अभिज्ञः इत्यन्वयः । हुमिति वितर्के, वर्तते = विद्यते, रघुपतेश्चरिते महिम्नि च किंचिद्वक्तव्यमिति शेषः, वृद्धाः = वयोज्येष्ठाः, ते = रामादयः, विचारणीयचरिताः = आलोचनीयचरित्राः, न तिष्ठन्तु=न वर्तन्ताम् , संभावनायां लोट् । एतेषां वयोमात्रं गौरवहेतुर्न चरित्रमिति भावः । सुन्दस्त्रीमथनेऽपि = सुन्दस्त्रियाः ( सुन्ददैत्यपत्न्याः, ताडकाया इत्यर्थः ) मथनेऽपि = वधेऽपि, अकुण्ठयशसः = अकुण्ठम् ( अप्रतिहतम् ) 'अखण्ड' मिति पाठे पूर्णमित्यर्थः, तादृशं यशः = कीर्तिः, येषां ते. ते = रामचन्द्राः, लोके = भुवने, महान्तः = श्रेष्ठाः, हि = निश्चयेन, शास्त्रनिषिद्धे स्त्रीवधाचरणेऽपि लोकस्तान् प्रशंसत्येवेति अहो ! तेषां महत्त्वमिति भावः । खरा-

---

लव—रामचन्द्रके चरित्र और महिमाको कौन नहीं जानता ? कुछ कहनेके योग्य भी हो, अथवा नहीं कहना चाहिये । ( रामचन्द्रजीके चरित्रमें कुछ वक्तव्य ) हाँ है ।

बूढे वे ( रामचन्द्र ) आलोचनीय चरित्रवाले नहीं । सुन्दकी स्त्री ( ताडका ) को

---

❀ 'किं वर्ण्यते' इति पाठान्तरम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

यानि त्रीणि कुतोमुखान्यपि पदान्यासन्खरायोधने ।
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ ३४ ॥

चन्द्रकेतुः—आः तातापवादिन्! भिन्नमर्याद! अति हि नाम प्रगल्भसे।

---

योधने = खरेण ( तदाख्येन राक्षसेन सह ) आयोधने = युद्धे, 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्' इत्यमरः । यानि = प्रागनुष्ठितानि, त्रीणि = त्रिसंख्यकानि, कुतोमुखानि = पराङ्मुखानि, पदानि अपि = पादन्यासाः अपि, आसन् = अभवन् , खरस्याऽत्यन्ताऽऽसन्नत्वेन स्थितत्वात् , रामश्चापकर्षणार्थं पदत्रयं निवृत्य तं जघानेति प्रसिद्धिः, तच्च रामकर्तृकं पदत्रयं यावन्निवर्तनं पलायनं मन्यमानो लवः 'न निवर्तेत संग्रामात्क्षात्रं धर्ममनुस्मरन्' इति स्मृत्वाऽऽचिक्षेपेति ज्ञेयम् । 'कुतोमुखानी'त्यत्र **'अपराङ्मुखानी'**ति पुस्तकान्तरपाठस्तत्र—अपरावृत्तानीत्यर्थः, अनिवृत्तपदं यथा तथा पश्चात्स्थापितानीति भावः । वा = अथवा, इन्द्रसूनुनिधने = इन्द्रसूनोः ( वालिनः ) निधने = वधे, यत् = पूर्वाऽनुष्ठितं, कौशलं = नैपुण्यम् , अन्तर्धानपूर्वकमिति भावः, सुग्रीवेण सह युद्धयन्तं वालिनं वृक्षखण्डे तिरोभूय रामो यज्जघानेति विशदाऽर्थः । तत्राऽपि = तस्मिन् कौशलेऽपि, जनः = सर्वो लोकः, अभिज्ञः=विज्ञाता, अस्तीति शेषः, सर्वजनप्रसिद्धान्येतानि रामकार्याणि नाऽस्माभिर्वर्णनीयानीति भावः । अत्र वक्तुमिष्टस्य रामदोषरूपस्य वस्तुनः तिष्ठन्त्वित्यनेन निषेधाभावाद्वक्ष्यमाण **आक्षेपाऽलङ्कारः** । तदुक्तं साहित्यदर्पणे—'वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये । निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा ॥' इति । **शार्दूलविक्रीडितं** वृत्तम् ॥ ३४ ॥

**चन्द्रकेतुरिति** । आः = कोपद्योतकमव्ययमिदम् , तातापवादिन् = रामविषयकदोषवादिन् , अत एव भिन्नमर्याद = भिन्ना (उल्लङ्घिता) मर्यादा=सदाचारो येन, तत्सम्बुद्धौ, **'तातापवादभिन्नमर्यादे'**ति पाठे—तातस्य = पितृचरणस्य, रामस्येत्यर्थः, अपवादेन = निन्दया, भिन्नमर्याद, शिष्टं स्पष्टम् । अति हि=अत्यर्थमेव, नाम=कोपद्योतकमव्ययमिदं 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ।' इत्यमरः, प्रगल्भसे = धृष्टो भवसि; 'गल्भ-धाष्टर्ये' इति धातोर्लट् ।

---

मारनेमें भी अप्रतिहत यशवाले वे लोकमें श्रेष्ठ ही हैं । खरके साथ युद्धमें तीन पग पीछे हटे थे, अथवा वालिके मारनेमें जो निपुणताकी थी उसमें भी लोग जानकार हैं ॥ ३४ ॥

चन्द्रकेतु—ओह ! पिताजीकी निन्दा और शिष्टाचारका उल्लङ्घन करनेवाले ! तुम बहुत ही ढीठ हो रहे हो ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



लवः—अये ! मय्येव भ्रुकुटीमुखः संवृत्तः ।

सुमन्त्रः—स्फुरितमनयोः क्रोधेन । तथा हि—

क्रोधेनोद्धतधूतकुन्तलभरः सर्वाङ्गजो वेपथुः
किञ्चित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः ।
धत्ते कान्तिमिदं च वक्त्रमनयोर्भङ्गेन भिन्नं* भ्रुवो-

**लव इति ।** भ्रुकुटीमुखः = कोपेन भ्रूभङ्गयुक्तवदनः, संवृत्तः = संजातः ।

**सुमन्त्र इति ।** अनयोः = लवचन्द्रकेत्वोः, स्फुरितं = प्रादुर्भूतं, 'नपुंसके भावे क्त' इति क्तप्रत्ययः, क्रोधस्फुरितं द्योतयति—तथा हीति ।

**क्रोधेनेति ।** क्रोधेन उद्धतधूतकुन्तलभरः सर्वाङ्गजो वेपथुः, स्वयं कोकनदच्छदस्य किंचित् सदृशे नेत्रे रज्यतः । भ्रुवोः भङ्गेन भीमम् अनयोः इदं वक्त्रं च उद्भटलाञ्छनस्य चन्द्रस्य उद्भ्रान्तभृङ्गस्य कमलस्य च कान्तिं धत्त इत्यन्वयः । क्रोधेन = कोपेन, उद्धतधूतकुन्तलभरः = उद्धतं ( सातिशयं, यथा तथा ) धूताः = चलिताः, कुन्तलभराः = केशभाराः यस्मिन् सः, 'चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ।' इत्यमरः, सर्वाऽङ्गजः=समस्तशरीरोत्पन्नः, एतादृशो वेपथुः = कम्पः, अस्तीति शेषः, **'चूडामण्डलबन्धनं तरलयत्याकूतजो वेपथु'**रिति पुस्तकान्तरपाठस्तत्र—आकूतजो वेपथुः चूडामण्डलबन्धनं तरलयतीत्यन्वयः । आकूतजः = रिपुदमनाऽभिप्रायोत्पन्नः, वेपथुः = कम्पः, चूडामण्डलबन्धनं, चूडामण्डलस्य = शिखासमूहस्य, बन्धनं = ग्रन्थिम् , तरलयति = चालयति इत्यर्थः । स्वयं = स्वभावादेव, कोकनदच्छदस्य=रक्तोत्पलपत्रस्य, 'रक्तोत्पलं कोकनदं', 'दलं पर्णं छदः पुमान्' इत्युभयत्राऽप्यमरः, किंचित् = ईषत् , सदृशे = तुल्ये, एतादृशे नेत्रे = नयने, रज्यतः = रक्ते भवतः, कोपेनेति शेषः । भ्रुवोः = भ्रूद्वयस्य, भङ्गेन = कौटिल्येन, भीमं = भयङ्करम् , अनयोः =

लव—अरे ! ये मेरे ऊपर ही भ्रुकुटी चढ़ाने लगे हैं ।

सुमन्त्र—इन दोनोंके क्रोधकी वृद्धि हो गई है । क्योंकि—

क्रोधसे केशोंको अतिशय हिलानेवाला समस्त शरीरमें उत्पन्न कम्प प्रकट हो रहा है । स्वभावसे ही रक्तकमलके पत्रके कुछ सादृश्यवाले दोनों नेत्र लाल हो रहे हैं । भ्रूभङ्गसे

* 'कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्त्रम्' इति पाठान्तरम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

श्चन्द्रस्योद्भट*लाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च ॥ ३५ ॥

लवः—कुमार ! कुमार ! एह्येहि । विमर्दक्षमां भूमिमवतरावः ।

( इति निष्क्रान्ताः सर्वे । )

इति महाकविभवभूतिविरचित उत्तररामचरिते कुमारविक्रमो नाम पञ्चमोऽङ्कः ॥ ५ ॥

---

लवचन्द्रकेत्वोः, इदम् = एतत्, वक्त्रं च = मुखं च, उद्भटलाञ्छनस्य = प्रकटकलङ्कस्य, एतादृशस्य चन्द्रस्य = चन्द्रमसः, एवं च उद्भ्रान्तभृङ्गस्य = उद्भ्रान्ताः ( ऊर्ध्वं भ्रमन्तः ) भृङ्गाः = भ्रमराः, यस्मिंस्तस्य, तथाभूतस्य कमलस्य च = पद्मस्य च, कान्तिं = शोभां, धत्ते = धारयति । अत्र 'कान्ति धत्ते' इत्यत्र असम्भवद्वस्तुसम्बन्धरूपो **निदर्शनाऽलङ्कारः**, कम्परक्तनेत्रतादिरूपैर्हेतुभिः क्रोध-रूपसाध्यस्य ज्ञानादनुमानाऽलङ्कारश्च, तथा च द्वयोरङ्गाङ्गिभावेन **सङ्करः** । **शार्दूलविक्रीडितं** वृत्तम् ॥ ३५ ॥

**लव इति** । एहि = आगच्छ, विमर्दक्षमां = युद्धयोग्याम्, अवतरावः = अव-तीर्णौ भवावः ।

इति श्रीशेषराजशर्म्मप्रणीतायामुत्तररामचरितव्याख्यायां चन्द्र-कलाऽऽख्यायां कुमारविक्रमनामकः पञ्चमोऽङ्कः ॥ ५ ॥

---

भयङ्कर इन दोनोंके मुख भी कलङ्कयुक्त चन्द्रकी और ऊपर घूमनेवाले भ्रमरोंसे युक्त कमलकी भी कान्तिको धारण कर रहे हैं ॥ ३५ ॥

लव—कुमार ! कुमार ! आओ आओ, युद्धके योग्य भूमिमें हम दोनों उतर पड़ें ।

( इसके अनन्तर सब जाते हैं । )

यह **कुमारविक्रम**नामक पांचवाँ अङ्क समाप्त हुआ ॥ ५ ॥

---

* 'स्योत्कट' इति पाठान्तरम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# षष्ठोऽङ्कः

( ततः प्रविशति विमानेनोज्ज्वलं विद्याधरमिथुनम् । )

विद्याधरः—अहो नु खल्वनयोर्विकर्तनकुलकुमारयोरकाण्डकलह-प्रचण्डयोरुद्द्योतितक्षत्रलक्ष्मीकयोरत्यद्भुतोद्भ्रान्तदेवासुराणि विक्रान्त-विलसितानि । तथा हि प्रिये ! पश्य ।

झणज्झणितकङ्कणक्वणितकिङ्किणीकं धनु-

---

तत इति । युद्धस्य 'दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।' इति दृश्यत्व-निषेधात् विष्कम्भकेन तदाह—विद्याधरमिथुनमित्यादिना । विद्याधरो देवयोनि-विशेषः, स च विद्याधरी च विद्याधरौ, 'पुमान् स्त्रिया' इत्येकशेषः, तयोर्मिथुनम् = द्वन्द्वम्, विमानेन = व्योमयानेन ।

विद्याधर इति । अहो = आश्चर्यद्योतकमव्ययमिदम् । अकाण्डकलहप्रचण्ड-योः = अकाण्डे ( अनवसरे ) यः कलहः = विरोधः, तेन प्रचण्डयोः = अतिशयित-कोपनयोः, उद्योतितक्षत्रलक्ष्मीकयोः = उद्योतिता ( प्रकाशिता ) क्षत्रलक्ष्मीः=क्षत्रि-यशोभा, ययोस्तयोः, एतादृशयोः, अनयोः = पुरःस्थितयोः, विकर्तनकुलकुमा-रयोः = सूर्यवंशबालकयोः, लवचन्द्रकेत्वोरिति भावः । अत्यद्भुतोद्भ्रान्तदेवाऽसुरा-णि = अत्यद्भुतेन ( अतिविस्मयेन ) उद्भ्रान्ताः = विमूढाः, देवासुराः=अमरदैत्याः, येषु तानि, विक्रान्तविलसितानि = वीरचरितानि, 'शूरो वीरश्च विक्रान्त' इत्यमरः, 'गत्यर्थाऽकर्मके'त्यादिना क्तप्रत्ययः । अनयोरुभयोरपि पराक्रमेण देवादयोऽपि कतरस्य जयः कतरस्य पराजयश्च भविष्यतीति निश्चेतुमशक्ताः सन्तो विस्मयपर-वशा भवन्तीति भावः । पश्य पश्य = अवलोकय अवलोकय, विस्मये द्विरुक्तिः ।

झणदिति । झणज्झणितकङ्कणक्वणितकिङ्किणीकं ध्वनद्गुरुगुणाऽटनीकृतक-रालकोलाहलं धनुः वितत्य शरान् अविरतं किरतोः शूरयोः पुनः विचित्रं भुवन-भीमम् आयोधनम् अभिवर्तत इत्यन्वयः । झणज्झणितकङ्कणक्वणितकिङ्किणीकं = 'झणज्झण' इति अव्यक्ताऽनुकरणशब्दः, स संजातोऽस्य तत्, 'तदस्य सञ्जातं तारकादिभ्य इतच्' इति इतच्प्रत्ययः, झणज्झणितं = सञ्जातझणज्झण-शब्दम्, यत् कङ्कणं = करभूषणम्, तस्येव क्वणितं = शब्दः, यासां ताः, तादृश्यः किङ्किण्यः = क्षुद्रघण्टिकाः, यस्मिंस्तत्, 'किङ्किणी क्षुद्रघण्टिका' इत्यमरः,

---

( अनन्तर विमानमें चढ़कर प्रकाशमान विद्याधरी और विद्याधर प्रवेश करते हैं । )

विद्याधर—अहो ! अनवसरमें विरोध कर अतिशय क्रुद्ध, क्षत्रियशोभासे सम्पन्न सूर्यवंशके इन दोनों कुमारोंके, अतिशय आश्चर्यसे देवता और दैत्योंको भी मोहयुक्त करनेवाले वीरचरित्र प्रकाशित हो रहे हैं । जैसे कि प्रिये ! देखो—

'झन झन' शब्द करनेवाले कङ्कणकी तरह शब्द करनेवाली किङ्किणियोंसे युक्त, भारी

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलम् ।
वितत्य किरतोः शरानविरतं पुनः शूरयो-
विंचित्रमभिवर्तते भुवनभीममायोधनम् ॥ १ ॥
जृम्भितं च विचित्राय मङ्गलाय द्वयोरपि ।
स्तनयित्नोरिवामन्ददुन्दुभेर्दुन्दुमायितम् ॥ २ ॥
तत्प्रवर्त्यतामनयोः प्रवीरयोरनवरतमविरलमिलितविकचकनककमल-

---

ध्वनद्गुरुगुणाऽटनीकृतकरालकोलाहलं = ध्वनन् ( शब्दं कुर्वन् ) गुरुः=महान् , गुणः = मौर्वी, यया, तादृशी या अटनी = धनुष्कोटिः, 'कोटिरस्याऽटनी' इत्यमरः, तया कृतः = विहितः, करालः = भीषणः, कोलाहलः = कलकलः, यस्मिंस्तत्, एतादृशं धनुः = कार्मुकं, वितत्य = मण्डलीकृत्य, शरान् = बाणान् , अविरतं = निरन्तरं, किरतोः = प्रक्षिपतोः, शूरयोः = वीरयोः, लवचन्द्रकेत्वोरित्यर्थः । **'अविरतस्फुरच्चूडयोः'** इति पाठान्तरं तत्र—अविरतं = निरन्तरम् , यथा तथा स्फुरन्त्यः = प्रचलन्त्यः, चूडाः = शिखाः, ययोस्तयोरित्यर्थः, पुनः = भूयः, विचित्रम्=अत्यद्भुतं, भुवनभीमं = भुवनेषु ( लोकेषु ) भीमम् = भयङ्करम् , आयोधनं = युद्धम् , अभिवर्तते = सम्मुखं विद्यत इति भावः । **'अभिवर्द्धते'** इति पाठे संमुखं वृद्धिं प्राप्नोतीति भावः । अत्र **'उपमावृत्त्यनुप्रासयोः संसृष्टिः । पृथ्वी** वृत्तं, 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ।' इति तल्लक्षणम् ॥ १ ॥

**जृम्भितमिति ।** द्वयोरपि विचित्राय मङ्गलाय स्तनयित्नोरिव अमन्ददुन्दुभेः दुन्दुमायितं जृम्भितम् इत्यन्वयः । द्वयोरपि = उभयोरपि, लवचन्द्रकेत्वोरपीति भावः, विचित्राय = अत्यद्भुताय, मङ्गलाय = कल्याणाय, उत्साहवर्द्धनायेति भावः, स्तनयित्नोरिव=गर्जन्मेघस्येव, अमन्ददुन्दुभेः=महाभेर्याः, दुन्दुमायितं = दुन्दुमेत्याकारकः शब्दः, जृम्भितं=प्रवृत्तम्, **'विजृम्भितं च दिव्यस्य'** इति पुस्तकान्तरपाठे–'दिव्यस्य' इत्येतत् 'दुन्दुभेः' इत्यस्य विशेषणं, शेषं प्राग्वत् । **उपमालङ्कारः** ॥२॥

**तदिति ।** तत् = तस्माद्धेतोः, प्रवीरयोः = महावीरयोः अनयोः = लवचन्द्र-

---

मौर्वीको शब्दायमान करनेवाले और अग्र भागसे भयङ्कर कोलाहल करनेवाले धनुषको फैलाकर बाणोंको लगातार छोड़नेवाले इन दोनों वीर कुमारोंका फिर विचित्र ( अनूठा ) और लोकके लिए भयङ्कर संग्राम हो रहा है ॥ २ ॥

इन दोनों वीरोंके विचित्र कल्याणके लिए गर्जनेवाले मेघकी सदृश भारी भेरीका 'दुम्दुम' शब्द उत्पन्न हो रहा है ॥ २ ॥

इस कारणसे इन दोनों महावीरोंके ऊपर घने, मिले हुए और खिले हुए सुवर्ण-कमलोंसे

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कमनीयसंहतिरमरतरुतरुणमणिमुकुलनिकरमकरन्दसुन्दरः पुष्पनिपातः।

विद्याधरी—ता किं ति पुरो आआसं दुद्दंततरलतडिच्छडाकडारं अवरं विअ झत्ति संवुत्तम् ? ( तत्किमिति पुर आकाशं दुर्दर्शतरलतडिच्छटाकडारमपरमिव झटिति संवृत्तम् ? )

विद्याधरः—तत्किं नु खल्वद्य ?

त्वष्टृयन्त्रभ्रमिभ्रान्तमार्तण्डज्योतिरुज्ज्वलः।

---

केत्वोः, अविरलमिलितविकचकनककमलकमनीयसंहतिः = अविरलैः ( घनैः ) मिलितैः = संमिलितैः, 'ललित' इति पाठे-ललितैः = सुन्दरैः, विकचैः = विकसितैः, कनककमलैः = सुवर्णपद्मैः, कमनीया = मनोहरा, संहतिः = समूहः, 'संततिः' पदपाठे सन्ततिः = पङ्क्तिः, यस्य सः। अमरतरुतरुणमणिमुकुलनिकरमकरन्दसुन्दरः = अमरतरूणां ( पारिजातादीनाम् ) ये तरुणमणिमुकुलाः = नूतनरत्नसदृशाः कुड्मलाः, तेषां निकरस्य = समूहस्य, ये मकरन्दाः = पुष्परसाः, तैः सुन्दरः=मनोरमः, 'कुड्मलो मुकुलोऽस्त्रियाम्', 'मकरन्दः पुष्परस' इत्युभयत्राऽप्यमरः, एतादृशः पुष्पनिपातः=प्रसूनवृष्टिः, अनवरतं=निरन्तरम्, प्रवर्त्यताम्=आरभ्यताम्।

**विद्याधरीति।** किमिति = केन हेतुना, पुरः = अग्रतः, दुर्दर्शतरलतडिच्छटाकडारम्=दुर्दर्शा ( दुःखेन दर्शनीया ) तरला, = चञ्चला, या तडिच्छटा=विद्युद्दीप्तिः, तया कडारम् = कपिलम्, आकाशं = व्योम, झटिति = सत्वरम्, अन्यत् इव = अपरम् इव, संवृत्तं=जातमित्यर्थः।

**त्वष्टृति।** ललाटस्थनीललोहितचक्षुषः त्वष्टृयन्त्रभ्रमिभ्रान्तमार्तण्डज्योतिरुज्ज्वलः पुटभेद इत्यन्वयः। ललाटस्थनीललोहितचक्षुषः = ललाटस्थं ( भालस्थितम् ) नीललोहितस्य = शिवस्य, यत् चक्षुः = नेत्रम्, अग्निरूपं तृतीयं नयनमिति भावः, तस्य, त्वष्टृयन्त्रभ्रमिभ्रान्तमार्तण्डज्योतिरुज्ज्वलः = त्वष्टुः ( विश्वकर्मणः ) यन्त्रं = शाणयन्त्रम्, तस्य भ्रमिः = भ्रमणक्रिया, तया भ्रान्तः= घूर्णितः यो मार्तण्डः = सूर्यः, तस्य ज्योतिः = तेजः, इव उज्ज्वलः = दीप्यमानः,

---

सुन्दर समूहवाली तथा पारिजात आदि वृक्षोंके नूतनरत्नोंके सदृश मुकुलोंके मकरन्दों ( पुष्परसों ) से सुन्दर पुष्पवृष्टि निरन्तर छोड़ो।

**विद्याधरी**—तब क्यों सामने दुःखसे दर्शनीय और चञ्चल बिजलीकी पङ्क्तिसे पिङ्गल वर्णवाला यह आकाश झटपट दूसरे पदार्थके सदृश हो गया है ?

**विद्याधर**—तब क्या आज—

ललाटस्थित महादेवके नेत्रका विश्वकर्माके शाणयन्त्र (सान) के भ्रमणसे घूमनेवाले सूर्यके

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

पुटभेदो ललाटस्थनीललोहितचक्षुषः ॥ ३ ॥

( विचिन्त्य ) आं ज्ञातम् । जातक्षोभेण चन्द्रकेतुना प्रयुक्तमप्रतिरूपमाग्नेयमस्त्रम्, यस्यायमग्निवच्छरसम्पातः । संप्रति हि ।

अवदग्धबर्बरितकेतुचामरैरपयातमेव हि विमानमण्डलैः ।
दहति ध्वजांशुकपटावलीमिमां नवकिंशुकद्युतिसविभ्रमः शिखी ॥४॥

---

पुटभेदः = पुटयोः = पक्ष्मणोः, भेदः = उन्मीलनम्, संवृत्तः किमिति शेषः । महादेवस्य वैश्वानररूपं तृतीयं नेत्रमुन्मीलितं किमिति भावः । पुरा स्वपतेर्भास्करस्य अतिप्रौढतेजोऽसहमानया संज्ञया तत्तेजःप्रशमनाऽर्थं पिता विश्वकर्मा प्रार्थितः, स च भगवन्तं भास्करं शाणयन्त्रमारोप्य मुहुर्मुहुः परिभ्रामणेन तेजःशातनतः सह्यमानतेजसमकार्षीदिति पौराणिकी कथाऽनुसन्धेया । अत्र **लुप्तोपमासंदेहालङ्कारौ** ॥ ३ ॥

**विचिन्त्येति** । विचिन्त्य=विचार्य । जातक्षोभेण = जातः ( उत्पन्नः ) क्षोभः= चाञ्चल्यम्, यस्य तेन, अप्रतिरूपम् = सादृश्यरहितम्, असाधारणमिति भावः । आग्नेयम् = अग्निदैवतमस्त्रं, प्रयुक्तं = प्रेरितम्, यस्य=आग्नेयास्त्रस्य, शरसम्पातः= वाणधारा, **'अग्निच्छटासम्पात'** इति पाठे वह्निज्वालापतनमित्यर्थः ।

**अवदग्धेति** । अवदग्धबर्बरितकेतुचामरैः विमानमण्डलैः अपयातम् एव हि । नवकिंशुकद्युतिसविभ्रमः शिखी इमां ध्वजांशुकपटावलीं दहति इत्यन्वयः । अवदग्धबर्बरितकेतुचामरैः = अवदग्धानि ( किञ्चित्प्लुष्टानि ) बर्बरितानि = दाहनवर्बरध्वनियुक्तानि, **'कर्बुरितानि'** इति पाठे चित्रवर्णानि, एतादृशानि केतुचामराणि = ध्वजाः प्रकीर्णकानि च, येषां तैः, 'चामरं तु प्रकीर्णकम्' इत्यमरः, एतादृशैः विमानमण्डलैः=व्योमयानसमूहैः, अपयातम् एव = पलायितमेव, दाहभयादिति शेषः । हि=निश्चयेन, नवकिंशुकद्युतिसविभ्रमः = नवकिंशुकद्युतेः ( नूतनपलाशकुसुमकान्तेः ) सविभ्रमः = विलाससदृशः, नवपलाशपुष्पकान्तिसदृश इति भावः, एतादृशः शिखी = अग्निः, इमां = पुरःस्थितां, ध्वजांऽशुकपटावलीं=ध्वजा-

---

प्रकाशके तुल्य उन्मीलन हुआ है ? ॥ ३ ॥

( विचार कर ) हाँ जान लिया । क्षोभसे युक्त होकर चन्द्रकेतुने अनुपम आग्नेय अस्त्रका प्रयोग किया है । अग्निके तेजके सदृश जिसकी यह बाणधारा है । इस समय—

कुछ जले हुए तथा 'बर्बर' शब्दवाले ध्वजाओं और चामरोंसे युक्त विमानोंके समूह भाग गये हैं, नये पलाशपुष्पकी कान्तिके तुल्य अग्नि ध्वजोंके सूक्ष्म वस्त्रोंकी पङ्क्तिको जला रही है ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

आश्चर्यम् । प्रवृत्त एवायमुच्चण्डवज्रखण्डावस्फोटपटुरटत्स्फुलिङ्गगुरुरुत्तालतुमुललेलिहानोज्ज्वलज्वालासंभारभैरवो भगवानुषर्बुधः । प्रचण्डश्चास्य सर्वतः संपातः। तत्प्रियामंशुकेनाच्छाद्य सुदूरमपसरामि (तथा करोति।)

---

नां=महाकेतूनाम्, अंशुकानि = सूक्ष्मवस्त्राणि, एव पटाः = शोभनवस्त्राणि, तेषाम्, आवलीं = पङ्क्तिम्, 'उत्तरीये वस्त्रमात्रे सूक्ष्मवस्त्रेऽपि चांशुकम् ।' इति रत्नमाला, दहति=भस्मीकरोति, **उपमाऽलङ्कारः**। पुस्तकान्तरेषु तु उत्तरार्द्धे—**'दधति ध्वजाऽङ्कुशपटाऽञ्चलेष्विमाः । क्षणकुङ्कुमच्छुरणविभ्रमं शिखाः ।'** इति पाठस्तत्र—इमाः शिखाः ध्वजाऽङ्कुशपटाञ्चलेषु क्षणकुङ्कुमच्छुरणविभ्रमं दधतीत्यन्वयः । इमाः = सन्निकृष्टस्थाः, शिखाः = वह्निज्वालाः, ध्वजाऽङ्कुशपटाञ्चलेषु = ध्वजानां ( महाकेतूनाम् ) ये अङ्कुशाः=तदाकारदण्डाः, तेषां ये पटाः= शोभनवस्त्राणि, तेषाम् अञ्चलेषु=प्रान्तेषु, क्षणकुङ्कुमच्छुरणविभ्रमं = क्षणं ( कञ्चित्कालं यावत् ) यत् कुङ्कुमच्छुरणं=केसरसम्पर्कः, तस्य विभ्रमं = शोभाम्, दधति= धारयन्ति । तत्र असम्भवद्वस्तुसम्बन्धरूपो **निदर्शनाऽलङ्कारः**। **मञ्जुभाषिणी** वृत्तम्, 'सजसा जगौ भवति मञ्जुभाषिणी ।' इति तल्लक्षणम् ॥ ४ ॥

**आश्चर्यमिति** । उच्चण्डवज्रखण्डावस्फोटपटुरटत्स्फुलिङ्गगुरुः = उच्चण्डः ( अतिभयङ्करः ) यः वज्रखण्डः = अशनिशकलम्, तस्य अवस्फोटः=स्फोटनम्, स इव पटुः=प्रबलम्, यथा तथा, रटन् = शब्दं कुर्वन्, स्फुलिङ्गगुरुः = कणबहुलः, उत्तालतुमुललेलिहानोज्ज्वलज्वालासंभारभैरवः = उत्तालम् ( अत्युन्नतं ) तुमुलः = सङ्कुलः, लेलिहानः = भृशं कवलनपरः, उज्ज्वलः = प्रदीप्तः, यः ज्वालासम्भारः अर्चिःसमूहः, तेन भैरवः = भयङ्करः, भगवान् = सामर्थ्यसम्पन्नः, उषर्बुधः = उषसि= सन्ध्यायाम्, बुध्यत इत्युषर्बुधः, अग्निरित्यर्थः, आहिताऽग्नयो हि अग्निमुषसि प्रादुष्कुर्वन्ति, 'शोचिष्केश उषर्बुधः' इत्यमरः, प्रवृत्त एव = संलग्न एव । अस्य = अग्नेः, संपातः = सम्पतनं, **'सन्ताप'** इति पाठे संदाह इत्यर्थः । प्रचण्डः= अतितीक्ष्णः । अंशुकेन = वस्त्रेण, **'अङ्केने'**ति पाठे हस्तोरःस्थलाद्यवयवेनेत्यर्थः ।

---

आश्चर्य है । अतिभयङ्कर वज्रखण्डके टूटनेके समान प्रबलतापूर्वक शब्द करते हुए और चिनगारियोंसे अत्युन्नत और तुमुल तथा वारं वार ग्रास करनेवाले प्रदीप्त ज्वालासमूहसे भयङ्कर ये भगवान् अग्निदेव प्रकट हुए हैं । इनका सब ओर भयङ्कर संपात ( गमन ) हो रहा है । इस कारण प्रियाको कपड़ेसे ढाँककर दूर चला जाता हूं ( वैसा ही करता है )।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

विद्याधरी—दिट्ठिआ एदेण विमलमुत्तासेअसीअलसिणिद्धमसिणमंसलेण णाहदेहप्फंसेण आणन्दसंदलिदघुण्णमाणवेअणाए अद्धोदिदो एव्व अन्दरिदो मे संदावो । ( दिष्ट्या एतेन विमलमुक्ताशैलशीतलस्निग्धमसृणमांसलेन नाथदेहस्पर्शेनानन्दसंदलितघूर्णमानवेदनाया अर्धोदित एवान्तरितो मे सन्तापः । )

विद्याधरः—अयि ! किमत्र मया कृतम् ? अथवा ।

> न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
> तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ५ ॥

विद्याधरी—कहं अविरलविलोलघुण्णमाणविज्जुल्लदाविलासमंसलेहिं मत्तमऊरकण्ठसामलेहिं ओत्थरीअदि णभोङ्गणं जलहरेहिं ? ( कथमविरल-

---

**विद्याधरीति ।** दिष्ट्या = भाग्येन, विमलमुक्ताशैलशीतलस्निग्धमसृणमांसलेन = विमलः ( निर्मलः ) यः मुक्ताशैलः=मौक्तिकपर्वतः, **'मौक्तिकसर'** इति पाठे हार इत्यर्थः, स इव शीतलः = शीतः, स्निग्धः = स्नेहयुक्तः, मसृणः=कोमलः, तथा मांसलश्च=पुष्टश्च, तेन । नाथदेहस्पर्शेन=नाथदेहस्य (पतिशरीरस्य) स्पर्शेन=आमर्शनेन, आनन्दसंदलितघूर्णमानवेदनायाः = आनन्देन ( स्पर्शजन्यसुखेन ) संदलिता= विनष्टा, घूर्णमाना=प्रसरन्ती, वेदना=दुःखम् , यस्यास्तस्याः, एतादृश्या मे=विद्याधर्याः, अर्धोदित एव = किंचिदुत्पन्न एव, संतापः = दाहः, अन्तरितः=तिरोहितः ।

**विद्याधर इति ।** अयि = कोमलाऽऽमन्त्रणद्योतकमिदमव्ययम् । किं कृतं = किमनुष्ठितं, न किमपीति भावः । अथवा = यद्वा ।

**न किञ्चिदपीति ।** श्लोकोऽयं द्वितीयाऽङ्के श्रीरामपठितो व्याख्यातपूर्वश्च तत्रैव ( पृ० ११० तमे ) द्रष्टव्यः ॥ ५ ॥

**विद्याधरीति ।** अविरलविलोलघूर्णमानविद्युल्लताविलासमांसलैः = अविरलं =

---

**विद्याधरी**—कुछ ही उत्पन्न होकर मेरा सन्ताप भाग्यसे निर्मल मोतीके पहाड़के सदृश ठण्डा, चिकना, कोमल और पुष्ट पतिदेवके इस शरीरस्पर्शसे आनन्दके कारण फैलती हुई वेदनाके दूर होनेसे विनष्ट हो गया है ।

**विद्याधर**—अरी ! इसमें मैंने क्या किया है ? अथवा—

जो मनुष्य जिसका प्यारा है, वह कुछ न करता हुआ भी सामीप्यमात्रसे उत्पन्न सुखोंसे दुःखोंका नाश करता है ; इस कारणसे वह उसका अनिर्वचनीय पदार्थ है ॥ ५ ॥

**विद्याधरी**—किस तरह निरन्तर चञ्चल और घूमती हुई बिजलियोंके चमकनेसे पुष्ट

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


विलोलघूर्णमानविद्युल्लताविलासमांसलैर्मत्तमयूरकण्ठश्यामलैरवस्तीर्यते नभोऽङ्गणं जलधरैः ? )

विद्याधरः—कुमारलवप्रयुक्तवारुणास्त्रप्रभावः खल्वेषः। कथमविरलप्रवृत्तवारिधारासंपातैः प्रशान्तमेव पावकास्त्रम्।

विद्याधरी—पिअं मे, पिअं मे। ( प्रियं मे, प्रियं मे। )

विद्याधरः—हन्त भोः सर्वमतिमात्रं दोषाय। यत्प्रलयवातोत्क्षोभगम्भीरगुलुगुलायमानमेघमेदुरितान्धकारनीरन्ध्रनद्धमिव एकवारविश्वग्रसन-

---

निरन्तरम्, विलोलाः = चञ्चलाः, घूर्णमानाः = भ्रमन्त्यः, या विद्युल्लताः = तडिद्वल्ल्यः, तासां यो विलासः = स्फुरणम्, तेन मांसलैः = पुष्टैः, **'मण्डितैः'** इति पाठे अलङ्कृतैः। मत्तमयूरकण्ठश्यामलैः = मत्ताः ( मदयुक्ताः ) ये मयूराः = बर्हिणः, तेषां कण्ठा इव श्यामलाः=नीलाः, तैः, एतादृशैः जलधरैः=मेघैः, नभोऽङ्गणम्=आकाशाऽजिरम्, 'अङ्गणं चत्वराऽजिरे' इत्यमरः, अवस्तीर्यते=आच्छाद्यते।

**विद्याधर इति।** कुमारलवप्रयुक्तवारुणाऽस्त्रप्रभावः = कुमारलवेन ( तन्नाम्ना कुमारेण), प्रयुक्तस्य = प्रेरितस्य, आग्नेयार्थप्रशमनाऽर्थमिति भावः। वारुणाऽस्त्रस्य= वरुणदैवतशस्त्रस्य, प्रभावः = सामर्थ्यम्। अविरलप्रवृत्तवारिधारासंपातैः=अविरलं= निरन्तरम्, प्रवृत्ताः=प्रसृताः, या वारिधाराः=जलधाराः, तासां संपातैः=सम्पतनैः, पावकाऽस्त्रम् = आग्नेयाऽस्त्रं; चन्द्रकेतुप्रयुक्तमिति शेषः, प्रशान्तं = निर्वापितम्।

**विद्याधरीति।** प्रियं मे प्रियं मे = हर्षद्योतिकेयं द्विरुक्तिः।

**विद्याधर इति।** अतिमात्रं=मात्राम् ( प्रमाणम् ) अतिक्रान्तं, प्रमाणाऽतिक्रान्तमित्यर्थः, 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः, दोषाय = दूषणाय, कल्पत इति शेषः। यत् = यस्माद्धेतोः, प्रलयवातोत्क्षोभगम्भीरगुलुगुलायमानमेघमेदुरिताऽन्धकारनीरन्ध्रनद्धमिव = प्रलये ( कल्पान्ते ) **'प्रबले'ति** पाठे प्रबलः =

---

और मत्त मयूरोंके सदृश श्याम वर्णवाले मेघ आकाशको आच्छादित कर रहे हैं ?

**विद्याधर**—यह कुमार लवसे छोड़े गये वारुणास्त्रका प्रभाव है। किस तरह निरन्तर फैली हुई जलधाराओंके पड़नेसे आग्नेय अस्त्र शान्त ही हो गया है।

**विद्याधरी**—मुझे पसन्द है, मुझे पसन्द है।

**विद्याधर**—आह ! अरे ! सब पदार्थ अत्यधिक होनेसे दोषके लिए होता है। जो कि प्रलयकालके वायुसे अतिशय चञ्चल और अधिक 'गुलुगुलु' शब्द करनेवाले मेघोंसे बने अन्धकारसे

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

विकटविकरालकालमुखकन्दरविवर्तमानमिव युगान्तयोगनिद्रानिरुद्धसर्वद्वारं नारायणोदरनिविष्टमिव भूतं विपद्यते । साधु चन्द्रकेतो ! साधु । स्थाने वायव्यमस्त्रमीरितम् । यतः ।

---

वलवान्, यो वातः = वायुः, तेन उत्क्षोभाः = अतिशयक्षोभयुक्ताः, गम्भीराः = अनल्पाः, गुलगुलायमानाः = गुलगुल्वितीदृशध्वनियुक्ताः, डाजन्तात्क्यच्, तदन्तात् शानच्; एतादृशा ये मेघाः = वलाहकाः, तैर्मेदुरितम् = सान्द्रितम्, यत् अन्धकारं = तिमिरम्, तेन नीरन्ध्रम् = अविरलम्, नद्धम् इव=बद्धम् इव 'नीरन्ध्रनिबद्धम्' इति पाठे ? नीरन्ध्रं = निरन्तरं यथा तथा, निबद्धम् = निरुद्धम् इत्यर्थः, एकवारविश्वग्रसनविकटविकरालकालमुखकन्दरविवर्तमानम् इव = एकवारम् ( एकक्षणं, यथा तथा ) विश्वस्य = जगतः, ग्रसनं = कवलनम्, तस्मै, विकटं = निम्नोन्नतम्, 'विकच' इति पाठे-विकचं = स्फुटं, व्यात्तमित्यर्थः, विकरालं = विशेषेण भीषणम्, यत् कालमुखम् = मृत्युवक्त्रम्, अत्र क्वचित् 'कालकण्ठकण्ठ' इति पाठस्तत्र-कालकण्ठः = नीलकण्ठः, महादेव इति भावः, तस्य यः कण्ठः = गल इत्यर्थः, तथा च कालमुखम् एव वा = कालकण्ठकण्ठ एव, यत् कन्दरं = दरी, तत्र विवर्तमानम् इव = चेष्टमानम् इव, युगान्तयोगनिद्रानिरुद्धसर्वद्वारं = युगान्ते ( कल्पान्ते ) या योगनिद्रा = ध्यानात्मकस्वापः, तया निरुद्धानि = संवृतानि, सर्वाणि = संपूर्णानि, द्वाराणि = मुखादिनिर्गममार्गाः, यस्य तत् । नारायणोदरनिविष्टम् इव = नारायणस्य ( भगवतः श्रीविष्णोः ) यत् उदरं = जठरम्, तस्मिन् निविष्टम् इव = स्थितम् इव, भूतं = प्राणिसमूहः, जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इति जातावेकवचनम्, विपद्यते = विपदं प्राप्नोति, 'प्रवेपते' इति पाठे प्रकम्पत इत्यर्थः, साधु=समीचीनम्, अनुष्ठितमिति शेषः । वायव्यं = वायुर्देवता अस्येति वायुदैवतमित्यर्थः, 'वाय्वृतुपित्रुषसो यत्' इति यत्प्रत्ययः, ईरितं = प्रेरितं, यत्, तत् स्थाने = युक्तम् । यतः = यस्मात् ।

---

अविरल रूपसे व्याप्तकी तरह, एक क्षणमें ही संसारके ग्रासके लिए ऊँचा और नीचा भयङ्कर तथा गुफाके सदृश कालके मुखमें चेष्टा करते हुएकी तरह, प्रलयकालमें योगनिद्रासे आवृत मुख आदि निर्गममार्गोंसे युक्त एवम् नारायणके पेटमें विद्यमानकी तरह होकर प्राणिसमूह विपत्ति पा रहा है । वाह ! चन्द्रकेतो ! वाह ! आपने जो वायव्य अस्त्र छोड़ा, वह ठीक किया । क्योंकि—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

विद्याकल्पेन मरुता मेघानां भूयसामपि ।
ब्रह्मणीव विवर्तानां क्वापि प्रविलयः कृतः ॥ ६ ॥

विद्याधरी—णाध ! को दाणिं एसो ससंभमोक्खित्तकरम्भमदुत्तरीअञ्चलो दूरदो एव्व महुरसिणिद्धवअणपडिसिद्धजुद्धव्वावारो एदाणं अन्दरे विमाणवरं ओदरावेदि ? (नाथ ! क इदानीमेष ससंभ्रमोत्क्षिप्तकरभ्रमदुत्तरीयाञ्चलो दूरत एव मधुरस्निग्धवचनप्रतिषिद्धयुद्धव्यापार एतयोरन्तरे विमानवरमवतारयति ?)

---

विद्याकल्पेनेति । विद्याकल्पेन मरुता भूयसाम् अपि मेघानां विवर्तानां ब्रह्मणि इव क्वापि प्रविलयः कृत इत्यन्वयः । विद्याकल्पेन = तत्त्वमस्यादिवाक्यविहितेन तत्त्वज्ञानसदृशेन, मरुता = वायुना, भूयसामपि = बहूनामपि, मेघानां= जलदानां, विवर्तानां = ब्रह्मणि कल्पितानां नामरूपाऽऽत्मकदृश्यपदार्थानां, ब्रह्मणि इव = निर्विशेषसन्मात्रे कूटस्थचैतन्य इव, क्वापि = कुत्रापि स्थले, प्रविलयः = निवृत्तिः, 'विप्रलय' इति पाठान्तरेऽप्ययमेवाऽर्थः, कृतः=विहितः । यथा ब्रह्मनिष्ठगुरूपदेशवशात्प्राप्तेन तत्त्वमस्यादिमहावाक्योत्पन्नेन तत्त्वज्ञानेन नामरूपात्मकानां निखिलानामपि प्रपञ्चानां ब्रह्मणि लयो भवति, तथैव चन्द्रकेतुप्रयुक्तेन वायव्यास्त्रेण लवप्रयुक्तस्य वारुणास्त्रस्य कुत्रापि प्रविलयः सञ्जात इति भावः । अत्र पूर्वार्द्ध उत्तरार्द्धे च स्थितयोर्द्वयोरुपमयोः सङ्करः ॥ ६ ॥

विद्याधरीति । ससंभ्रमोत्क्षिप्तकरभ्रमदुत्तरीयाञ्चलः = ससंभ्रमम् ( सत्वरं यथा तथा ) उत्क्षिप्तः = ऊर्ध्वं प्रेरितः, यः करः = पाणिः, तेन भ्रमन् = घूर्णन् , उत्तरीयाञ्चलः = प्रावारप्रान्तः, येन सः, 'पट्टकाञ्चल' इति पाठे राजवस्त्रप्रान्त इत्यर्थः, उत्तरीयाञ्चलभ्रामणं च युद्धनिवारणार्थं बोध्यम् । मधुरस्निग्धवचनप्रतिषिद्धयुद्धव्यापारः = मधुराणि ( प्रियाणि ) स्निग्धानि = स्नेहपूर्णानि, यानि वचनानि = वाक्यानि, तैः प्रतिषिद्धः = निषिद्धः, युद्धव्यापारः = समरक्रिया, येन सः, एतयोः= लवचन्द्रकेत्वोः, अन्तरे = मध्ये, विमानवरं = व्योमयानप्रधानं, पुष्पकमिति भावः । अवतारयति = अवरोहयति ।

---

जिस तरह तत्त्वज्ञान ब्रह्मकल्पित नामरूपात्मक पदार्थोंका ब्रह्ममें लय कर देता है, उसी तरह वायुने भी बहुसंख्यक मेघोंका कहींपर लय कर दिया है ॥ ६ ॥

विद्याधरी—नाथ ! अभी यह कौन दूरसे ही शीघ्रतासे ऊँचे किये हुए हाथसे उत्तरीयको हिलाता हुआ मीठे और स्नेहपूर्ण वचनोंसे युद्धक्रियाका निषेध कर इन दोनोंके बीचमें श्रेष्ठ विमान ( पुष्पक ) को उतार रहा है ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

विद्याधरः—( दृष्ट्वा । ) एष शम्बूकवधात्प्रतिनिवृत्तो रघुपतिः ।

शान्तं महापुरुषसंगदितं निशम्य तद्गौरवात्समुपसंहृतसंप्रहारः ।
शान्तो लवः,प्रणत एव च चन्द्रकेतुः कल्याणमस्तु सुतसंगमनेन राज्ञः ॥

तदितस्तावदेहि । ( इति निष्क्रान्तौ । )

विष्कम्भकः ।

---

**विद्याधरः ।** शम्बूकवधात् = शम्बूकवधं कृत्वा, 'ल्यब् लोपे कर्मण्यधिकरणे च' इति पञ्चमी, रघुपतिः = रामः ।

**शान्तमिति ।** शान्तं महापुरुषसंगदितं निशम्य तद्गौरवात् समुपसंहृतसंप्रहारः लवः शान्तः, चन्द्रकेतुश्च प्रणत एव, सुतसंगमनेन राज्ञः कल्याणम् अस्तु इत्यन्वयः । शान्तं = कठोरतारहितं, महापुरुषसंगदितं = महापुरुषेण ( रामेण ) संगदितम् = समुच्चारितम्, वचनमिति शेषः, निशम्य = श्रुत्वा, तद्गौरवात् = तस्य रामस्य, गौरवात् = गुरुत्वाद्धेतोः, रामविषयकपूज्यत्वबुद्धेरिति भावः, समुपसंहृतसंप्रहारः = समुपसंहृतः ( संत्यक्तः ) संप्रहारः = युद्धम्, येन सः, एतादृशो लवः= चन्द्रकेतुप्रतिद्वन्द्वो, शान्तः = शान्तिं प्राप्तः, एतेन लवस्य विनयो व्यज्यते । चन्द्रकेतुश्च = लक्ष्मणपुत्रश्च, प्रणत एव = रामं प्राणंसीदेव । सुतसंगमनेन = सुताभ्यां = लवचन्द्रकेतुभ्यां कुशलवाभ्यां वा, संगमनं = समागमः, तेन, राज्ञः = नृपस्य, रामचन्द्रस्येत्यर्थः, कल्याणं = मङ्गलम्, अस्तु = भवतात्, रामो लवम् 'अयं मत्पुत्र' इति परिचिनोत्विति भावः, विद्याधरेण ज्ञातत्वात्सुतेत्युक्तिः । अत्र लवचन्द्रकेत्वोरौग्र्यरूपस्य भावस्य प्रशमो रामविषयकरतेरङ्गमिति **समाहितमलङ्कारः ।** **वसन्ततिलका वृत्तम् ॥ ७ ॥**

**विष्कम्भक इति ।** मध्यमपात्राभ्यां विद्याधरदम्पतिभ्यां प्रयोजितत्वाच्छुद्धविष्कम्भकः । विष्कम्भकलक्षणं यथा साहित्यदर्पणे—'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥' इति । शुद्ध-

---

**विद्याधर**—( देखकर ) शम्बूकको मारकर लौटे हुए ये रामचन्द्रजी हैं ।

शान्तिपूर्ण महापुरुष ( रामचन्द्र ) का वाक्य सुनकर उनके गौरवसे युद्धको छोड़कर लव शान्त हो गये हैं और चन्द्रकेतुने भी रामचन्द्रजीको नमस्कार किया है । दोनों पुत्रोंके समागमसे महाराज ( रामचन्द्र ) का कल्याण हो ॥ ७ ॥

इस कारण इधर आओ ( दोनों जाते हैं ) ।

विष्कम्भक समाप्त हुआ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ततः प्रविशति रामो लवः प्रणतश्चन्द्रकेतुश्च । )

रामः—( पुष्पकादवतरन् । )

दिनकरकुलचन्द्र चन्द्रकेतो ! सरभसमेहि दृढं परिष्वजस्व ।
तुहिनशकलशीतलैस्तवाङ्गैः शममुपयातु ममापि चित्तदाहः ॥८॥

( उत्थाप्य सस्नेहास्रं परिष्वज्य । ) अप्यनामयं नूतनदिव्यास्त्रायोधनस्य तव ?

---

विष्कम्भकलक्षणमपि तत्रैव—'मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः । शुद्धः स्यात्' इति ।

**दिनकरेति ।** दिनकरकुलचन्द्र (हे) चन्द्रकेतो ! सरभसम् एहि, दृढं परिष्वजस्व ! तुहिनशकलशीतलैः, तव अङ्गैः मम चित्तदाहः अपि शमम् उपयातु इत्यन्वयः । दिनकरकुलचन्द्र = दिनकरकुलस्य ( सूर्यवंशस्य ) चन्द्र = चन्द्रतुल्याह्लादक, हे चन्द्रकेतो ! सरभसं = वेगपूर्वकम् , एहि = आगच्छ, दृढं = गाढं, परिष्वजस्व = आलिङ्ग, मामिति शेषः । आलिङ्गनप्रयोजनमुपपादयति—**तुहिनेति** । तुहिन-शकलशीतलैः = तुहिनस्य ( हिमस्य ) शकलैरिव = खण्डैरिव, शीतलैः = शीतैः, तव = चन्द्रकेतोः, अङ्गैः = शरीरावयवैः, मम = अतिशयसन्तापयुक्तस्य रामस्य, चित्तदाहोऽपि=सीताविरहजन्यो मनस्तापोऽपि, शरीरदाहमात्रस्य का कथेति भावः। शमं = शान्तिम् , उपयातु = प्राप्नोतु । अत्रोपमाऽर्थापत्तिलाटाऽनुप्रासानामलङ्काराणां मिथोऽनपेक्षया स्थितेः संसृष्टिः । पुष्पिताग्रा वृत्तम् ॥ ८ ॥

**उत्थाप्येति ।** परिष्वज्य = आलिङ्ग्य । नूतनदिव्यास्त्राऽऽयोधनस्य = नूतनं = नवीनम् , दिव्यास्त्रैः = अलौकिकाऽऽयुधैः, आयोधनं = संग्रामः, यस्य स इति बहुव्रीहिः, एतादृशस्य तव = चन्द्रकेतोः, अनामयम् अपि = आरोग्यमस्ति किमित्यर्थः, 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् ।' इति स्मृते रामकर्तृकश्चन्द्रकेतुं प्रति कुशलप्रश्नः सङ्गच्छते ।

---

( तब रामचन्द्रजी, लव और नमस्कार करते हुए चन्द्रकेतु प्रवेश करते हैं । )

राम—( पुष्पकसे उतरते हुए )

सूर्यवंशके चन्द्ररूप हे चन्द्रकेतो ! जल्दी आओ और दृढ आलिङ्गन करो । बरफके टुकड़ेके समान ठण्डे तुम्हारे अङ्गोंसे मेरे मनका ताप भी शान्तिको प्राप्त करे ॥ ८ ॥

( उठाकर स्नेहसे आँसू गिराते हुए आलिङ्गन कर ) दिव्य अस्त्रोंसे नूतन संग्राम करनेवाले तुम्हारा अनामय ( स्वास्थ्य–आरोग्य ) है न ?

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


चन्द्रकेतुः—अभिवादये । कुशलमत्यद्भुतप्रियवयस्यलाभाभ्युदयेन । तद्विज्ञापयामि मामिव विशेषेण स्निग्धेन चक्षुषा पश्यत्वमुं वीरमनरालसाहसं तातः ।

रामः—( लवं निरूप्य । ) दिष्ट्या अतिगम्भीरमधुरकल्याणाकृतिरयं वयस्यो वत्सस्य ।

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै ।

---

चन्द्रकेतुरिति । अत्यद्भुतप्रियवयस्यलाभाऽभ्युदयेन = अत्यद्भुतस्य = अत्याश्चर्यकरस्य, प्रियवयस्यस्य=हृद्यमित्रस्य, यो लाभः=प्राप्तिः, स एव अभ्युदयः= उन्नतिः, तेन । विज्ञापयामि = निवेदयामि, स्निग्धेन = स्नेहयुक्तेन, अनरालसाहसम् = अनरालम् ( अकुटिलम् ) साहसं = दुष्करं कर्म, यस्य तम् , 'अरालं वृजिनं जिह्मम्' इत्यमरः, 'साहसं तु दमे दुष्करकर्मणि । अविमृश्यकृतौ धाष्ट्र्ये' इति हेमकोशः, अमुं = पुरःस्थं, वीरं = लवमित्यर्थः ।

राम इति । निरूप्य=दृष्ट्वा । अतिगम्भीरमधुरकल्याणाकृतिः=अतिगम्भीरा= अक्षोभणीया, मधुरा = सौन्दर्योपेता, कल्याणी = सुलक्षणा, आकृतिः = आकारो यस्य सः ।

त्रातुमिति । लोकान् त्रातुं परिणतः कायवान् अस्त्रवेद इव, ब्रह्मकोशस्य गुप्त्यै तनुं श्रितः क्षात्रो धर्म इव, सामर्थ्यानां समुदय इव, गुणानां सञ्चयो वा, जगत्पुण्यनिर्माणराशिः आविर्भूय स्थित इव इत्यन्वयः । लोकान् = भुवनानि, त्रातुं = रक्षितुं, परिणतः = परिणामं गतः, नररूपं गत इत्यर्थः, अस्त्रवेद इव = धनुर्वेद इव, कायवान् = मूर्तिमान् सन् , ब्रह्मकोशस्य = वेदसमूहस्य, 'वेदस्तत्त्वं तपो ब्रह्म, ब्रह्मा विप्रः प्रजापतिः ।' इत्यमरः, गुप्त्यै = रक्षणाय, तनुं = शरीरं, श्रितः = आश्रितः, क्षात्रः = क्षत्रसम्बन्धी, धर्म इव = स्वभाव इव, शौर्यादिरूप इव

---

चन्द्रकेतु—अतिशय आश्चर्यजनक कर्म करनेवाले प्रिय मित्रकी प्राप्तिस्वरूप उन्नतिके कारण कुशल है । इसलिए निवेदन करता हूँ कि पिताजी ! अकुटिल दुष्कर कर्म करनेवाले इस वीरको-जैसे मुझे देखते हैं, उसी तरह विशेष स्नेहपूर्ण दृष्टिसे देखें ।

राम—( लवको देखकर ) भाग्यसे वत्सका यह मित्र अतिशय गम्भीर, सुन्दर और शुभ लक्षणोंसे युक्त आकारवाला है ।

यह लोकरक्षाके लिए शरीरधारीके रूपमें परिणत धनुर्वेदके सदृश, वेदसमूहकी रक्षा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सामर्थ्यानामिव समुदयः, सञ्चयो वा गुणाना-
माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥९॥

लवः—( स्वगतम् । ) अहो पुण्यानुभावदर्शनोऽयं महापुरुषः ।

आश्वास इव भक्तीनामेकमायतनं महत् ।
प्रकृष्टस्येव धर्मस्य प्रसादो मूर्तिसुन्दरः ॥ १० ॥

आश्चर्यम् ।

---

इति भावः, सामर्थ्यानां = प्रारब्धकार्यनिर्वाहशक्तीनाम् , समुदाय इव = समूह इव, गुणानां = धैर्यादीनां, सञ्चयो वा = समूह इव, जगत्पुण्यनिर्माणराशिः = जगतां = लोकानाम् , यानि पुण्यनिर्माणानि = धर्मानुष्ठानानि, तेषां राशिः = पुञ्जः, आविर्भूय = प्रत्यक्षीभूय, स्थित इव = विद्यमान इव, अयं वत्सस्य वयस्य इति पूर्ववाक्यांशेनान्वयः । अयं कोऽपि लोकोत्तरः पुरुष इति भावः । अत्र पञ्चानामपि **गुणोत्प्रेक्षाणां** मिथोऽनपेक्षया **संसृष्टिः । मन्दाक्रान्ता वृत्तम्** ॥ ९ ॥

**लव इति ।** अहो = आश्चर्यद्योतकोऽयं निपातः, पुण्यानुभावदर्शनः = पुण्ये ( पवित्रे ) अनुभावदर्शने = प्रभावविलोकने, यस्य सः ।

**आश्वास इति ।** भक्तीनाम् आश्वास इव, एकं महत् भक्तीनाम् आयतनं च प्रकृष्टस्य धर्मस्य मूर्तिसुन्दरः प्रसाद इव इत्यन्वयः । भक्तीनां = श्रद्धानाम् , आश्वास इव = जनकस्थानसुखमिव, एकम्=अद्वितीयं, महत्=विपुलम् , भक्तीनां = श्रद्धानाम् , आयतनं च = आधारश्च, **'आश्वासः स्नेहभक्तीनाम्'** इति पाठे स्नेहस्य=प्रेम्णः, शिष्टं सुगमम् । प्रकृष्टस्य = लोकोत्तरस्य, धर्मस्य = पुण्यस्य, मूर्त्या = शरीरेण, सुन्दरः = रुचिरः, **'सञ्चर'** इति पाठे—संचरणशील इत्यर्थः । प्रसाद इव = प्रसन्नता इव, महापुरुषेऽस्मिन् धर्मो मूर्तिमान् सन् संचरतीति भावः । अत्रो**त्प्रेक्षाऽलङ्कारः** ॥ १० ॥

---

करनेके लिए देहधारी क्षत्रियधर्मके समान, पराक्रमोंके समुदायके तुल्य, धैर्य आदि गुणोंके सञ्चयके सदृश, और लोकोंके धर्माऽनुष्ठानोंका समूह प्रकट होकर स्थित है ॥ ९ ॥

लव—( मन ही मन ) अहो ! ये महापुरुष पवित्र सामर्थ्य और दर्शनसे युक्त हैं ।

ये श्रद्धाओंके सुखजनक स्थानके सदृश, श्रद्धाओंके अद्वितीय और महान् आधार तथा लोकोत्तर धर्मकी मूर्तिमती प्रसन्नताके सदृश हैं ॥ १० ॥

आश्चर्य है ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

विरोधो विश्रान्तः, प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति, विनयः प्रह्वयति माम् ।
झटित्यस्मिन्दृष्टे किमिति परवानस्मि, यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ ११ ॥

रामः—तत्किमयमेकपद एव मे दुःखविश्रामं ददात्युपस्नेहयति च कुतोऽपि निमित्तादन्तरात्मानम् ? अथवा 'स्नेहश्च निमित्तसव्यपेक्ष' इति विप्रतिषिद्धमेतत् ।

---

**विरोध इति ।** विरोधो विश्रान्तः, निर्वृतिघनो रसः प्रसरति, तत् औद्धत्यं क्वापि व्रजति, विनयो मां प्रह्वयति, अस्मिन् दृष्टे किमिति झटिति परवान् अस्मि, यदि वा हि तीर्थानाम् इव महतां कोऽपि महार्घः अतिशय इत्यन्वयः । विरोधः = वैरं, 'वैरं विरोधो विद्वेष' इत्यमरः, विश्रान्तः = विरतः । निर्वृतिघनः = निर्वृत्या = आनन्देन, घनः=सान्द्रः, एतादृशो रसः=अनुरागः, प्रसरति=विसर्पति, अयं शान्त्याख्यस्य भावस्योदयः । तत्=प्राग्भवम् , औद्धत्यं=दर्पः, क्वापि=कुत्रापि, व्रजति = गच्छति, एतद्दर्शनेनैव दर्पो दूरीभूतः, इयं भावशान्तिः । विनयः=नम्रता, मां=लवं, प्रह्वयति=नमयति । अस्मिन्=पुरःस्थिते महापुरुषे, दृष्टे=अवलोकित एव, किमिति= केन हेतुना, झटिति=सत्वरं, परवान्=पराधीनप्रायः, अस्मि=भवामि । यदि वा = अथवा, हि=यतः, तीर्थानाम् इव = पुण्यक्षेत्राणाम् इव, महतां = महापुरुषाणां, कोऽपि = लोकोत्तरः, महार्घः = महामूल्यः, अतिशयः=उत्कर्षः, भवतीति शेषः । अत्रोपमाऽर्थान्तरन्यासयोः सङ्करः । शिखरिणी वृत्तम् ॥ ११ ॥

**राम इति ।** एकपद एव=एकस्मिन्क्षण एव, अव्ययपदमेतत् । दुःखविश्रामं=दुःखस्य ( सीताविरहोत्पन्नायाः पीडायाः ) विश्रामं = विश्रान्तिम् , 'विश्राम' इत्यत्र श्रम एव श्रामः, स्वार्थे अण् , ततो विशिष्टः श्रामो विश्राम इति गतिसमासः, अन्यथा घञि 'नोदात्तोपदेशस्ये'त्यादिना निषेधेन वृद्धेर्दुर्लभत्वादपाणिनीयत्वाऽऽशङ्का सञ्जायेतेति । कुतोऽपि = अनिर्वाच्यात् , निमित्तात् = हेतोः, अन्तरात्मानम् = अन्तःकरणम् , उपस्नेहयति = स्नेहयुक्तं करोति । निमित्त-

---

वैर शान्त हो गया, अतिशय सुखसे गाढ अनुराग फैल रहा है, वह दर्प कहीं चला गया है और नम्रता मुझे झुका रही है, इनके देखनेपर न जाने क्यों झटपट पराधीन हो गया हूँ ? अथवा पवित्र स्थानोंकी तरह महापुरुषोंका कोई बहुमूल्य उत्कर्ष होता है ॥ ११ ॥

**राम**—यह बालक सहसा ही दुःखको विश्राम दे रहा है, किसी कारणसे अन्तःकरणको स्नेहयुक्त कर रहा है; अथवा 'स्नेह कारणकी अपेक्षा करता है' यह विरुद्ध बात है ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

